# वेहुलानखिन्दरम्

नाम

## चम्पूकाव्यम् ।

---

गवर्णमेण्टवृत्तिभोगिकृगलिविद्यालयभूतपूर्ब्बपण्डित-

श्रीभगवच्चन्द्रविशारदप्रणीतम् ।

प्रेक्षावतां सुमनसां मनसाप्रबन्ध-
सङ्कल्पिता कृतिरियं कृतिसाध्ययत्नैः ।
सम्पादिता भगवता महतां जनानां
कारुण्यदृक्पथगता मुदमातनोतु ॥


कलिकाताराजधान्याम्

वि. पि. एम्स् यन्त्रे

मुद्रितम् ।

वाराणसीवासिश्रीविश्वनाथशास्त्रिणा

…तम् ।

सवत् १९८

# BEHULA NAKHINDARAM

## A HISTORICAL ROMANCE

*In Sanskrit*

BY

BHAGABAT CHANDRA VISARADA

Late Pundit of the Hooghly College,

and author of " Sukhabodha Byakarana."

---

CALCUTTA :

PRINTED [illegible] M'S PRESS.

1870

# PREFACE.

The introduction of Sanscrit into the curriculum of studies the Calcutta University has induced its author to present this new treatise to the public. It is a desideratum so far as regards the utter absence of any recent original productions of the kind to meet the increasing demand of the University—although the stock of ancient literature is inexhaustible and its high merit incontrovertible. The time has come when the native intellect should be exerted to give to the world specimens of new ideas and scenes of life more in keeping with the present state of civilization and progress.

The plot of this work is taken from a most popular tale known in Bengal as the adventures of *Bahoola*—the celebrated woman who is said to have restored her deceased husband to life by her unflinching perseverance and unexampled devotion to the Goddess *Manasa*. An attempt has been made to introduce into the body of the poem some of the manners and customs prevalent in Bengal—especially those connected with marriage—and some of the natural sceneries which will not be uninteresting to the readers. It is proper here to mention that certain facts described in it might appear quite extravagant and incredible, but it must be remembered that the period in which they seem to have occurred, and the manner in which they have been handed down to us, would leave little doubt as to their being the effusions of fancy or the workings of an excited imagination.

The author has endeavoured to render the style and language of his work as perspicuous as possible, and, although he is aware of his many imperfections and the difficulty of the task he has undertaken, he hopes that his labours would be deemed amply rewarded, if the indulgent public were to overlook his errors and afford him every encouragement that may be in their power to bestow.

CALCUTTA
The 5th March 1870

B. C. R.

# विज्ञापनम् ।

सा ख्याता संस्कृता वाणी हिन्दूनां शास्त्ररूपिणी ।
या भाषाऽमरलोकानां द्विजातीनां ततो भुवि ॥
साऽधुना भारतेवर्षे राज्यभारनिषेविणा ।
विद्याध्यक्षेण सर्व्वत्राध्ययनाय नियोजिता ॥
तद्भाषासुखशिक्षार्थं तद्विद्याध्ययनार्थिनाम् ।
पाठ्यानां पुस्तकानां हि मुद्रणं बहुभिः कृतम् ॥
न तत्र दृष्टं विदुषा प्रणीतं पाठ्यं नवं पुस्तकमेकमेव ।
अतः प्रणेतुं नवकाव्यमेकं मयाऽनुरागेण कृतः प्रयत्नः ॥
नाम्नैतन्मत्कृतं काव्यं यद्बेहुलानखिन्दरम् ।
ऊषाऽनिरुद्धयोस्तत्रोपाख्यानं प्रतिरूपकम् ॥
उत्कर्षबुद्ध्या मनसा प्रबन्धः सङ्कल्पितोऽयं मनसाप्रबन्धः ।
प्राचीनकालावधि सुप्रसिद्धो विशुद्धपद्मादिपुराणसिद्धः ॥
सालङ्कारं गुणैर्युक्तं रसभावसमन्वितम् ।
वाक्यं प्रशस्यते सद्भिस्तद्देवात्र प्रतिष्ठितम् ॥
अलौकिकं यद्देवात्र विशेषेणानुकीर्त्तितम् ।
विजानीयुर्महाभागास्तत्सर्व्वं दैवतापरम् ॥
साधभक्षणमारभ्य सुतस्य प्रसवान्तरम् ।
षष्ठीदेव्यर्च्चनञ्चान्यत् बाल्यलीलादिकं ततः ॥
विवाहकार्य्यं व्यवहारसम्मतं वैवाहिकानाञ्च सभासदां पुनः ।
वादवादावुपहासकौतुकं सर्व्वं यथालौकिकमत्रवर्णितम् ।
कोपप्रसादौ भयदुःखशोकाः सुखोत्सवौ पूजनपद्धतिश्च ।
स्तवाद्यं सङ्कृत्यगीतैर्यथाक्रमं कीर्त्तितमत्र सर्व्वम् ॥

## विज्ञापनम् ।

संशोधयन्तु विबुधा मम काव्यमेत-
दुत्साहवर्द्धनधिया निजया प्रकृत्या।
केषाञ्च निर्म्मलचिदामनुमोदनेन
संवर्द्धितं विषमसाहसमीदृशं मे ॥

स्वरूपकाव्यं सुकविप्रमोदनं विचार्य्य यत्नेन मया प्रणीयते ।
इशां प्रसादैर्विदुषां महीयसां महान् प्रयासः सफलोऽनुमीयते

मुद्रादोषाच्चाच्चिदोषाद्भ्रमेण
यद्वैरूप्यं दृश्यतेऽत्रोपपन्नम् ।
प्रायः सर्व्वं शुद्धिपत्रेण बोध्यं
शोध्यञ्चान्यत् साधुभिः सानुकूलैः ॥

शाके धराङ्काश्वसुधांशुमाने शैलाग्निमे कुम्भमिते दिनेशे ।
देवद्विजानाञ्च गुरोः प्रसादान्मुद्रासमाप्तिं कृतिरागतेयम् ॥

श्रीभगवच्चन्द्ररायस्य ।

---

## शुद्धिपत्रम् ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २१ | ११ | गतिस | वशगः |
| ३६ | १ | साधुःहर्षेण | साधुर्हर्षेण |
| ५७ | १ | ऽत्तमूदा | ऽभूत्तदा |
| ८१ | ५ | चेजीर्णं | सुजीर्णं |
| ८२ | २ | वायं तथ्यं यथा | वाच्यं यथातथ्यं |

## वन्दनानि ।

---

त्वां लम्बोदर वन्देऽहं हरन्तु मम किल्बिषं ।
तरुणारुणाभासस्ते पदपङ्कजरेणवः ॥
विघ्नं मे हर हेरम्ब कृपया करुणानिधे ।
याचते भगवच्चन्द्रः श्रिया युक्तो विशारदः ॥

---

ज्ञानदे मोक्षदे देवि वरदेऽज्ञाननाशिनि ।
शरण्ये त्वामहं वन्दे पुटपाणिः सरस्वति ॥

त्वं हि परात्परदेवनारायणदारा दोलायितकर्णकुण्डल-भारा कण्ठलम्बितगजमौक्तिकहारा केयूरभूषितभुजयुग-सारा करकलितवीणावादनविमोहितसुरगणा पद्मयोनिमुखपद्मविराजमाना वैकुण्ठनाथहृदयमधिशयाना श्वेतवसनं परिदधाना विकचपद्माननना धवलपद्मासना, हे देवि देहि मे त्वच्चरणाम्बुजयुगच्छायां, कुरु मे करुणामयि करुणां, हर मे सञ्चितपापं शोकं मोहं परितापञ्च, वस मम कण्ठे, सारय सुमधुरवचनं, शरणं मे तव पदपङ्कजयुगलं, प्रणमति तदगतिर्भगवति भगवान् श्रिया विशारदोपाधिः ।

---

वन्दे त्वच्चरणद्वन्द्वं चतुर्व्वर्गफलप्रदं ।
अयोनिसम्भवे लक्ष्मि सुखदा वरदा भव ॥
नारायणप्रणयपाशनिबद्धचित्ते
क्षीरोदनीरज-निवासिनि पद्मवक्त्रे ।

संसेविते सुरगणैः प्रणमामि भक्त्या
मातः कृताञ्जलिरहं तव पादपद्मं ॥
त्वत्पादपङ्कजरजःकणिकामुपेत्य
मातः कृपामयि तवानुचरो भुनक्ति ।
सिंहासनं हयगजाश्मलिरत्नमुक्ताः
पारत्रिकञ्च सुखमैहिकसर्वभोगम् ॥
यस्त्यक्तो जननि त्वया स च गुणैर्युक्तोऽपि निर्भर्त्स्यते
पित्राद्यैः स्वजनैः सहोदरगणैर्दारैश्च पुत्रादिभिः ।
तैरेव प्रतिपूज्यते यदि कृपा त्वत्पादपङ्केरुह-
स्तस्मात्त्वच्चरणारविन्दयुगलं भक्त्या मया वन्द्यते ॥
नानारत्नविराजितो निधियुतः पीयूषभाण्डोदरः
श्वेतैरावतपारिजातसहितः स्रोतस्वतीनां पतिः ।
राकानाथनिवासभूस्तदपि नो नाम्नेति रत्नाकर-
स्त्वां नीत्वा कमलालये स जठरं तन्नामधेयोऽभवत् ॥
बद्धाञ्जलिः स्वयमहं पुनरेव याचे
दृष्टिं विधेहि कमले मयि कातरेऽस्मिन् ।
हीनो जनस्तवकृपामधिगम्य मात-
र्वैकुण्ठनाथपदवीं समुपैत्यवश्यं ॥

---

भुजङ्गमातरं वन्दे मनसा विश्वपूजितां ।
नागासनसमासीनां नागभूषणभूषितां ॥
पत्नीं जरत्कारुमुनेः प्रधानां नाम्ना जरत्कारुमनन्तकीर्त्तिं ।
आस्तीकविख्यातमुनेः प्रसूतिं वन्दे स्वसारं भुजगेश्वरस्य ॥

वन्दनामि।

हे देवि मनसे मातस्त्वदनुग्रहणं विना।
न धारयितुमर्हन्ति जीवनं जीविनो जनाः॥
गुरुप्रसादेन कुरु प्रसादं भ्रूक्षेपमात्रेण ददासि बोधं।
यः सेवते त्वच्चरणारविन्दं मनोरथस्तस्य फलत्यवश्यं॥
वराभयकरे देवि सर्वानिष्टं निवारय।
विस्तारयात्मबोधं मे मायामोहं विनाशय॥
धृतविषधरकाया योगमाया त्वमाद्या
हर हरतनये मे दुष्कृतं दुर्निवारं।
भवभयहरणं ते पादपद्मं प्रणम्य
निगदति रघुकोऽसौ नित्यबद्धाञ्जलिस्त्वां॥

---

चिन्तामणिं परममद्भुतमाद्यमीशं
बोधस्वरूपमवितर्क्यगुणप्रभावं।
सृष्टिस्थितिप्रलयकारणमात्मयोनि-
मानन्दविग्रहमयं सततं स्मरामि॥
वन्देऽनन्तमजं देवं शाश्वतं जगतां पतिं।
योगीन्द्रैर्निर्मलस्वान्तध्येयं चिन्मयविग्रहं॥

---

परं प्रबोधपीयूषं यस्य वक्त्राद्विनिर्गतं।
पिबन्ति मुक्तये भक्तास्तं वन्दे परमं गुरुं॥

---

# वेहुलानखिन्दरम् ।

## अथ ग्रन्थारम्भः ।

### प्रथमसङ्कल्पना ।

अस्ति दामोदरनदीतीरे चम्पकं नाम नगरं । तत्र चन्द्रदासो नाम कश्चित् गन्धवणिक् धनपतिरासीत् । स च स्वजातीयवणिग्धर्म्मव्यवसायेन महाधनिकः र्थिवाहः साधुरिति नाम्ना भुवि विश्रुतोऽभूत् । तमेव साधुं तद्देशाधिपतिं विज्ञाय कदाचिद्देवी मनसा मनसा चिन्तयामास ।

देशाधिपं तमभिहृत्य महीतलेऽस्मिन्
पूजाप्रचारणविधिं सफलीकरोमि ।
निश्चित्य याचितवती मनसा तमादौ
साधो विधेहि विधिना विहितार्च्चनं मे ॥

तयैवमभ्यर्थितः साधुस्तस्याः सर्व्वमेवाभिप्रेतमधिगम्य विहस्योवाच, रे विवरवासिनि प्राणनाशिनि पापीयसि न त्वं देवीरूपेण पूजिता भवितुमर्हसि, देव्यस्तु दयादाक्षिण्यप्रभृतयः, त्वं पुनः खलस्वभावा, न तासां गुणलेशोऽपि त्वयि लक्ष्यते, अतः का त्वयाऽनु-

रक्षिः। यस्या दर्शनतो मृत्युभयमुपजायते सा कथं प्रीत्या पूजितव्या, को वा निर्बोधो दुग्धकदलीफलादिना मृत्युरूपिणीं त्वां परिपुष्य विनाऽश्चितुच्छिकं स्वमृत्युमुपग्रहीतुमभिवाञ्छति, अतएवाहं त्वामुपदिशामि यत् त्वमधुना स्वगेश्वरमनुगच्छ, तत्रैव ते सम्यगपचितिर्भविष्यतीति।

एवमुक्ता सती देवी क्रोधविस्फुरिताधरा।
आदिदेश निजान् नागान् कर्त्तुं तस्य प्रतिक्रियां॥
तदाज्ञयाऽऽगतैर्नागैर्दष्टा तस्य तु षट् सुताः।
सदनं प्रेतराजस्य प्रेषिताः क्रमशस्तदा॥
तथैवं पीडितः साधुः शोकेनापि समाकुलः।
मन्यतेस्म न तां देवीमिच्छतिस्म न चार्च्चितुम्॥
वरपुत्त्रविनाशेन दीप्तक्रोधानलो हि सः।
हिन्तालदण्डमादाय तां ताडयितुमुद्यतः॥
न ददर्श यदा देवीमित्युवाच पुनः पुनः।
अनेनैव हनिष्यामि यदा द्रक्ष्यामि तामहं॥
हतायामेव तस्यां स्यां निःशङ्को निरुपद्रवः।
सुखं निद्रामि भुञ्जामि व्रजामि कुशलं तदा॥
एवमतीतेषु बहुतिथेषु कालेषु स साधुः
"करोति नाम नीतिज्ञो व्यवसायमितस्ततः,
फलं पुनस्तदेवास्य यद्विधेर्मनसि स्थितं"

इति शासनात्, जातिधर्म्मस्वभावेन व्यवसायार्थं देशान्तरं गन्तुकामो द्रव्यजातेन सत्वैव पोतान् परितः पूरयित्वा दक्षिणपाटनाभिमुखं प्रतस्थे, स यदा शिव शिवेत्युच्चरन् कौतूहलेन प्रथममेव नावमारुरोह, तदाऽसौ

पोताध्यक्षं समाहूय तमवोचत् स्वयं वणिक्।
शृणु मे कर्णधार त्वं शङ्कास्थानं सदा पयः॥
अतः पोतप्रयाणे मे तरङ्गाकुलपाथसि।
सर्व्वत्र सावधानेन भवितव्यं त्वया सदा॥

एवमादिष्टः पोताध्यक्षो यथाऽऽज्ञापयति देव इत्युक्ता सतर्कतयैव दण्डवाहैर्वाहयित्वा सप्तैव पोतान् कालीये ह्रदे युगपदुपस्थापितवान्। तत्रोपस्थिते साधौ ध्यानेनाभिजानन्त्या तया देव्या पूर्व्वकोपस्मरणात् नेतया सख्या सहाभिमन्त्रितमिदं, सखि नेते चन्द्रदासो मामवज्ञाय कटुगिरा भाषमाणोपि नावमारुह्य वाणिज्येन धनमर्जयितुमधुना कालीयह्रदमुपस्थितः, तदेनमद्य द्रव्यजातसमेतं तत्र ह्रदे निमज्जयानि, स चेन्मां सादरमभिपूजयेत्तदा सर्व्वमेव पुनर्दास्यामीत्यभिमन्त्र्य देवी सर्व्वानपि जलचरान् समीरणादीन् महावीरं हनुमन्तमपि च स्मृतवती। ततस्तस्याः स्मरणमात्रेण सहसाऽऽगतान् तानेवं मनसा समादिदेश, भो भो जलचरजलधरहनुमत्पवनादयः; युष्माभिः सर्व्वैरेव मिलितैः सत्वरं कालीयह्रदमधिगम्य यथासामर्थ्यं बलविक्रमञ्च प्रकाश्य मत्प्रतिकूलाचारिणश्चन्द्रदासस्य सप्तापि नावो द्रव्यसमेता-स्तस्मिन्नेव ह्रदे निमग्नाः क्रियन्तामिति। यथाज्ञापयति देवीत्युच्चार्य्य चलितास्ते सर्व्वे तमेव ह्रदं समुपस्थिताः।

तत्र सहसैवोत्थितैः करिकराकारवारिधारा-वर्षिभिर्घन-घोरतरं गर्ज्जद्भिर्वारिदवृन्दैराक्रान्ते नभसि

सर्व्वमेव तिमिरावृतप्रभं वर्षतीव गगणं घनाञ्जनं।
हेमभेव वियति प्रकाशिता काशयत्यपि जगत् क्षणप्रभा
धाराः स्थूलतराः किरन्ति जलदा गर्ज्जन्ति तर्ज्जन्ति च
वाताश्च प्रबलायिता हनुमता वीरप्रवीरेण वै।

नावश्च प्रचलायिताः कलकलैरम्भस्तरङ्गायितं
ज्योतिर्भिश्चपलायिता च पविना सौदामिनी सङ्गता ॥
कुम्भीराद्या जलचरगणाः पोतपार्श्वे विलग्ना
दन्तैरुग्रैर्भयदवदनं व्याददाना ह्यहन्तः ।
मीनाः केचिद्गिरिवरसमा भीषयन्तः समन्ताद्-
दृष्ट्वैवैतान् सभयहृदयं चन्द्रदासो व्यलापीत् ॥

अविश्रान्तपतद्वारिधारापातहतेन्द्रियाः ।
विद्युद्वज्रप्रपातेन मस्तकाघातशङ्किनः ॥
भीषणाकारनक्रादिदर्शनव्याकुलान्तराः ।
शीतलानां शिलानाञ्च स्पर्शेनाकम्पिताधराः ॥
पोतवाहाश्च भृत्याश्च कर्णधारास्तथाऽपरे ।
ऊचुस्ते कातराः सर्वे हा हता हा हता वयं ॥

ततो नाविकाः परस्परमालपन्तिस्म, हा ! यत् किञ्चिल्लाभप्रत्याशया देशान्तरमागतानामस्माकं सर्व्वमेव प्रणष्टं, पोताश्च भग्ना जलमग्नप्राया दृश्यन्ते, जीवनाऽऽशापीह नास्ति, गृहगमनप्रत्याशा पुनः सुदूरपराहता, हा कष्टं हा कष्टं किमर्थमस्माभिर्लुब्धैरिहागतमिति । तदानीं प्राप्तावसरेण हनुमता चक्रावर्त्ते सप्तापि पोता घूर्णायिता इतस्ततश्चालिताः, पोतच्छादा अपि दूरे निक्षिप्ताः, तेषां भग्नच्छादपोतानां पार्श्वे भासितसर्व्वशरीरा यादोगणा नागगणाश्च मुखं व्यादाय गिलितुं दंशितुञ्च धावमाना बभूवुः । तरङ्गोत्तुङ्गतोये ह्रदे चक्रावर्त्तान्तरे क्वचिदुत्तोलिताः क्वचिच्च निमज्जितास्तरणीर्विलोक्य भयव्याकुलितचित्ता नाविकाः प्राणभयेन उल्लम्फ्योल्लम्फ्य पलायन्तस्तेषामेव नक्राणां मुखे निपेतुः । केचिद्प्लवन्तः सन्तरणशक्त्या तीरमासाद्य जीवितं प्राप्तवन्तः ।

अपरे कर्णधाराः, सघनघनगर्ज्जितेनाशनिनिस्वनेन भीताः करकावर्षणेन चाभिहताः शीतेन जड़ीभूता निष्पन्दा इव मूर्च्छां सम्प्राप्य पोतमध्ये निपतिताः । तथाचान्ये भत्याश्च कुम्भीरदलैर्गृहीता व्यापादिताः केपि पलायिताश्च । रज्जुं तरीणामवलम्ब्य केचित् स्थिताश्च मत्स्यैर्गिलिता स्तथान्ये ॥

अवसरं प्राप्य तदानीं हनुमान्
लम्फोल्लम्फप्रदानेन महता सह मारुतिः ।
हेलयाऽदोलयत्पोतान्नृत्यन्नारुह्य तत्क्षणं ॥
झञ्झाशनिप्रभावेण सर्व्वा नावो मुहुर्मुहुः ।
उन्मज्जन्तिस्म मज्जन्ति चक्रावर्त्ते पतन्ति च ॥
तथापि चन्द्रहासस्य विपन्नस्य सुदुर्म्मतेः ।
वक्त्रान्न निःसृतं नाम मनसायाः कथञ्चन ॥
शशंसातःपरं साधुः कृपया यदि शूलिनः !
प्राप्नोमि शङ्कटे कूलं निहन्मि मनसां तदा ॥
तस्य तद्व्याहृतं श्रुत्वा कोपविस्फुरिताधरः ।
वीरः श्रीहनुमांस्तत्र प्रकाश्य बलविक्रमम् ॥
पदाघातेन सप्तापि तरणीस्तस्य तत्क्षणात् ।
ह्रदे निमज्जयामास घूर्ण्यमाना हि वायुना ॥
चन्द्रश्चकम्पे पयसाभिषिक्तः पीनोदरो जीवनमात्रशेषः ।
दृष्ट्वा तमुच्चैर्विहसन् सहर्षं वीरप्रवीरो हनुमान् प्रतस्थे ॥
निमज्जितेषु पोतेषु रुदन्तः सर्वनाविकाः ।
प्रोचुर्वयं दरिद्राः स्मो ह्येला पोताश्च नो गताः ॥
आवर्त्ते तरयो ममज्जुरचिरं तेनैव साधोर्दशा
हीयन्तेस्म निरीक्ष्य नाविकजना मस्ते च हस्तं ददुः ।

धूलीलुण्ठितविग्रहं त्रिजलपुत्रेत्थं विपाकं गताः
सर्व्वस्वं सलिले गतं किमपि नो नैवोद्धृतं केनचित्॥
हा! कन्था क्व गता गतं क्व वसनं कुत्रापि कौपीनकं
सर्वं ग्रन्थिलचीरखण्डमपि नो नीतं बलाद्वायुना।
नास्त्येकं परिधेयमात्रमपि नः साधो त्वया किं कृतं
किं ब्रूमः करवाम किं हतधियः कुत्र व्रजामो वयं॥

एवं विलपन्तस्ते सर्व्वे समुत्थाय दिग्दिगन्तं गताः। चन्द्रदासस्तदानीं मृतकल्प इव जले भासमानो जलपानपूर्णोदरः कातरमालपतिस्म हा हतोऽस्मीति। स च मज्जनोन्मज्जनेनारक्तनेत्रो विगतवसनस्तदा केवलमिदमेवाचचक्षे, सैव तावत् सर्पतुण्डी काणी ममैतादृशमखिलं दुःखं ददाति।

जयद्विषहरी वियति रथोपरिवर्त्तमाना तद्वचनमाकर्ण्य सहास्यवदना तस्य तादृशीं दुर्गतिमालोक्य सकरुणं सहसा शतदलमेकं जले निचिक्षेप। नीराकुलः स साधुरप्राप्तकूलोऽपि सम्मुखीनं विकसितकमलमालोक्योवाच, अहो एतत्कुसुमयोनिः सैव सर्वनाशिनी, तन्नैतत् स्पृष्टव्यं, स्पृष्टे त्वधर्म्मो भविष्यतीति। ततो मुमूर्षुकल्पेनापि तेन तन्न स्पृष्टमेव। तथाप्यन्तिरोभूते सरोजे सा देवी कृपया पुना रामकदलीखण्डखण्डैकडुपमेकं कारयित्वा तरङ्गमध्ये निक्षिप्तवती। तद् दृष्ट्वा साधुस्तदुपरि समारुह्य तटमुपलेभे। तीरमुत्तीर्य्य स समग्रः शिवशिवेति जप्त्वा यथाविधि देवदेवं नमस्कृतवान्।

अहो ईशान देवेश त्वां भव प्रणमाम्यहं।
निवेदयामि चात्मानं त्वं मे भवगतिर्भव॥

अथैनं नम्रतया जलमध्यासीनं विलोक्य नेता देवरजकी विष-

स्याह, देवि मनसे मातस्त्वत्वां न जानात्ययं साधुः, तदेनं विपन्नं विवसनं कातरहृदयं रक्ष रक्षेति ।

नेताप्रणोदिता देवी चन्द्रहासं विवाससं ।
शवस्य वसनं छिन्नं परिधापयितुं ययौ ॥

सातिशयरूपलावण्यवती सती सा देवी जरत्कारुजाया कतिपय-समानवयोरूपकुलवधूसमेता कनककलसं कक्षे निधाय जलानयनच्छलेन तमेव प्रदेशं निमिषमात्रेण समुपस्थिता । कुलवधूगणमालोक्य साधुः सलज्जो जले लुक्कायितगात्रो बभूव ।

तं दिगम्बरं विज्ञाय सर्व्वा अपि ता रामा विहस्योचुः, रे च्छिन्न दिगम्बर किं जिवासाः सलिलमध्यासीनोसि, कथमत्रोपस्थितं शव-वस्त्रं न गृह्णीषे, तदाकर्ण्य लब्धचेतन इव वणिक् तोयादुत्थाय शवकन्था-वस्त्रादिपरिवृतगात्रः सन् बुभुक्षानिवृत्त्यर्थं नगराभिमुखं प्रतस्थे ।

ततो भिक्षार्थी स साधुर्यदा लोकालयं याचितुं प्रस्थितः तदा पथि वर्त्तमानाः शिशवः सर्वे परिच्छिन्नशववस्त्रं च्छिन्नप्रायं दृष्ट्वा तमिष्टक-लोष्ट्रैस्ताड़यन्तो हसन्तिस्म । तैराहतो वणिक् सखेदमिदं व्याजहार, भो वालकाः शृणुत कथं निरर्थकं मां पीड़यन्ति भवन्तः । अहं चन्द्र-हासो नाम वणिक् । दैवेनेदृग्दुर्दशापन्नोऽस्मि ।

साधोस्तद्वचनंश्रुत्वा हसन्तो वालका मुदा ।
परस्परमभाषन्त भिक्षुरेष कथं वणिक् ॥
वणिग्लक्षणमेतस्य पश्य कन्थावृतं वपुः ।
गङ्गापुत्त्र इवाभाति श्मशानपरिषेवकः ॥
प्रायेणैव ग्रहाविष्टो लक्ष्यते विकलेन्द्रियः ।
स्वरितानन्दपायीव मत्तो वाचालतां गतः ॥
ततस्तैस्ताड़ितो भिक्षुर्द्वारं द्वारं परिभ्रमन् ।

धान्यौदनवराटानि गृहेभ्यः पुण्यशालिनां ॥
यथाकथञ्चिदादाय भग्नैकावासमाश्रितः ।
तत्रैव सर्व्वं संस्थाप्य सर्व्वरीञ्च निनाय तां ॥
मनसा मनसा ध्यात्वा तेन यावदुपार्ज्जितं ।
मूषैर्हारयितुं सर्व्वं गणदेवमयाचत ॥
भो गणाधिप मद्भ्रातः देहि मे मूषिकांस्तव ।
दण्डद्वयं ते कुर्व्वन्तु ममाभिप्रेतसाधनं ॥
मनसामित्युवाचैवंयाचितो गणनायकः ।
सत्यं मे ब्रूहि तद्देवि कस्य वादस्त्वया सह ॥
देव्युवाच ततो देवं विपक्षो मे वणिक्पतिः ।
परुषं भाषते शश्वत् दण्डहस्तोऽनुधावति ॥
तस्यास्तद्वचनं श्रुत्वा विहस्याशु गजाननः ।
स्वमूषिकान् समादिश्य तां देवीमवदत् पुनः ॥
यथाभिलषितं गच्छ सङ्गृह्यैतांश्चरान् मम ।
साधयित्वा स्वकार्य्याणि देवि तान् प्रेषयिष्यसि ॥
गणेशवचसा प्रीता प्रफुल्लहृदया सती ।
मूषव्रजान् समादाय साधोरावासमाययौ ॥

आसाद्य भग्नं भवनं निशायां
साधुर्यदाऽसौ श्रमनिद्रितोऽभूत् ।
सा हारयामास गणेशमूषै-
र्द्रव्यं तदीयं तदगोचरेण ॥

साधयित्वा ततः कार्य्यं गणनाथनिदेशतः ।
मूषान् प्रस्थापयत्सर्व्वान् देवी सिद्धमनोरथा ॥

अथ प्रातरुत्थाय साधुर्भिक्षया लब्धं सर्व्वमेवापहृतं दृष्ट्वा चिन्तयामास ।

दुःखेन भिक्षया लब्धं यदेव गतवासरे।
चोरयामास तत् सर्व्वं पापिनी सर्व्वनाशिनी॥
अतएव न मे श्रेयः स्थातुमत्राधुना क्षणम्।
इत्युक्त्वा नगरं त्यक्त्वा प्रतस्थेऽसौ वनं वणिक्॥
भ्रमन्तं कानने सार्धं दृष्ट्वा विपत्तरी तदा।
दुःखं प्रदातुकामा सा तमेवानुययौ पुनः॥

तत्र वने केचिद्व्याधा अब्दाधिकमप्राप्तपक्षिणो जालं विस्तीर्य्य रज्जुभिर्वनस्थलं वेष्टयित्वा पक्षिणो भूमितलमवरोहयितुं तेषामाहार-कल्पनेन तत्र तण्डुलकणान् विकीर्य्य वृक्षान्तराले सग्गनलादिकं पक्षि-ग्रहणयन्त्रविशेषं एकतो गोपयित्वा तूष्णीं स्थिताः। पक्षिणोपि तदा-हारलोभेनाक्रष्टमनसस्तत्रायान्ति यान्ति च, इत्यवसरे तत्रोपस्थितश्चन्द्र-दासो वणिक्

हा धिक् दैवमहोदुःखमित्युच्चैः शब्दमुच्चरन्।
चिरसञ्चलितस्तत्र तच्छब्दैः पक्षिणो गताः॥

एवमेतेनोड्डीयमानेषु पक्षिषु पक्षिघातिनो निषादास्तमेव तेषामुड्डु-यनकारणमवधार्य्य प्रकुपिताः सर्व्वे तं वेष्टयित्वा धृतवन्तः केशे-ष्वाकृष्य मुष्टिकरतलघातादिना प्रहरन्तिस्म। तैराहतो वणिक् चन्द्रदास उच्चैरवादीत्। मा मारयत मा मारयत मां, नाहं चौरो नचैवापराधी, विनाऽपराधं कथमाहन्तमुद्यता मां भवन्तः।

तेप्यूचुः, रे दुष्ट नराधम यदि किमप्यत्र ते दोषो नास्ति तर्हि कथं पक्षिणस्ताड़िताः पलायन्तेस्म। रे हतभाग्य, कुतस्त्वं नः काल इवागतोसि, दूरं गच्छ रे नरशूकर। एवमवमानितो वणिक् रोरुद्यमानो वना-न्निःसृत्य मित्रादन्यः कोऽधुना शरणं भवेदिति चिन्तयन् मित्रभवनाभि-मुखं प्रातिष्ठत। यतः

"उत्सवे व्यसने चैव दुर्भिक्षे शत्रुविग्रहे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः" ॥

इति प्रसिद्धवचनं संस्मरन् मित्रमासाद्य सुखी भवेयमिति च वावदन् क्रमेण मित्रभवनद्वारमुपागच्छत् ।

तस्य मित्रं चन्द्रकेतुर्धर्म्मशीलो महाधनः ।
देवतातिथिभक्तश्च नातिदूरमवस्थितः ॥

मित्रवेश्मद्वारं गत्वा मित्रमित्याह्वयमानेन चन्द्रकेतुना तन्मित्रेण वहिरागत्य सम्मानितः साधुस्तमुवाच, भो मित्र चन्द्रकेतो विपन्नोऽहमधुना त्वामेव शरणं प्रपन्नोऽस्मि विधिना वामेन विडम्बितेन मया महद्दुःखमनुभूयते । उक्तञ्च,

"प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्त्तुरभून्न पतिष्यतः करसहस्रमपि" इति ॥

अतएवैतावद्दुःखं मे सर्वनाशिनी काशी मनसैव ददाति । तदेवोच्यते ।

कोपेन क्रमशस्तया मनसया व्यापादिताः षट्सुता
नावः सप्त निमज्जिताः पयसि मे दैवादहं जीवितः ।
देवत्र्यम्बकपादपद्मकृपया प्राणा न मे निर्गताः
किन्त्वेवं दशमीव दुर्गतिमयी जाता ममेयं दशा ॥

भाग्यैरेवाद्य मित्रेण दृष्टोऽस्मि भवता सखे ।
विपत्तौ रक्ष मां मित्र हितकार्य्यं विधीयतां ॥

स एव मित्रं कथितो महद्भिः सदैव यो यस्य हितं करोति ।
अत्रेतिहासश्चिरविद्यमानः संश्रूयतां सावहितेन मित्र ॥

इतिहासो यथा,

अयोध्याधिपतिदशरथतनयो रामचन्द्रो भरताय भ्रात्रे राज्यं समर्प्य सीतया लक्ष्मणेन च सहितः पित्राज्ञां प्रतिपालयितुं वनं जगाम ।

ततस्तेन यदा पञ्चवट्यामवस्थापिता जनकतनया रावणेन हृता कनक-लङ्कापुरं नीता च तदा तथाविपन्नो रामः स्वसमानदुःखेन कपिना सुग्रीवेण सह सख्यं विधाय मित्रस्य प्रत्ययार्थं मनोरञ्जनार्थञ्च बाणे-नैकेनैव सप्ततालान् विभेद, ततो मित्रभार्य्याराज्यापहारकं बालिनं निहत्य मित्राय तस्मै पुनस्तद्राज्यं च समर्पितवान् ।

एवं कृतवति रामे तन्मित्रेण सुग्रीवेणापि तस्य हितसाधनार्थं सागरसलिलेषु शिलाभिः सेतुर्बबन्धे ।

तावुभौ रामसुग्रीवौ मित्रकार्य्येषु तत्परौ ।
प्राणानपि पणं कृत्वा साधयामासतुर्हितं ॥
अहो साधितकार्य्यस्य तयोः पश्य समाहितः ।
शाश्वती वर्त्तते कीर्त्तिरद्यापि भुवनत्रये ॥

अपरे च ।

युधिष्ठिराद्यो वीरा भ्रातरः पञ्च पाण्डवाः ।
द्यूतेनापि पराभूता राज्यभ्रष्टा वनं ययुः ॥
पुनरज्ञातवेशेन विराटनगरे स्थिताः ।
विराटराजपुत्त्रेण मित्रेण प्रतिपालिताः ॥
शनैश्चरस्य कोपेन श्रीवत्सो नृपतिः स्वयं ।
नानाविधं महादुःखं बुभुजे वनवासतः ॥
महातेजा नलो राजा कलिकोपप्रभावतः ।
सर्पदष्टो विरूपाङ्गस्तथाभूद्‌बाहुकः ॥
क्लेशाधिकं कियत्कालं भुक्त्वा तौ भुवि विश्रुतौ ।
श्रीवत्सनलनामानौ राजानौ राज्यमागतौ ॥
अहन्तु तद्दशाग्रस्तो भवदाश्रयमागतः ।
कातरं वीक्ष्य मां मित्र त्वमद्य त्रातुमर्हसि ॥

ततस्तस्य वाक्ये पर्य्यवसिते चन्द्रकेतुर्वणिक् गृहागतं मित्रं चन्द्रदासं समाश्वास्य पाद्यमासनञ्च दत्त्वा निवेशयामास, स्वागतप्रश्नादिकं कृत्वा चाब्रवीत् । सखे चन्द्रदास बहुदिवसोत्तरं मित्रदर्शनमधिगम्य कृतार्थं-मन्योऽस्मि पुण्यवानपि जातः । यतः,

यस्य मित्रेण सम्भाषो यस्य मित्रेण संस्थितिः ।
यस्य मित्रेण संलापस्ततो नास्तीह पुण्यवान् इति ॥

अथ चन्द्रकेतोर्गृहे नित्यं मनसा पूज्यते, चन्द्रदासो नैतज्जानाति । पुनश्चन्द्रदासो यस्मिन्नेव गृहे पीठमध्यासीनस्तस्याभ्यन्तरे मनसाया वारिपूर्णो घटः पुष्पमाल्यसिन्दूरादिना पूजितोऽभिवर्त्तते ।

सिन्दूरबिन्दुना लिप्तः पुष्पमाल्यैर्विभूषितः ।
सोऽयं सिंहासने दृष्टः साधुना हृतचेतसा ॥

दृष्टिमात्रेणैव तेन सहसैवोत्थाय चोक्तं, रे पापीयसि चण्डमुखि सर्वनाशिनि काणि मम सर्वैव तरणीर्जले मज्जयित्वा मद्भयान्ममैव मित्रभवने लुक्कायितासि । एतावदेव कालं ते तत्त्वं नावगतोऽस्मि । मित्रन्तु मे केनापि गुणेन त्वां पूजयति तन्न जाने ।

रे पापकारिणि पाषण्डे उदारचित्तमेव वञ्चयित्वा जीवसील्युक्त्वा हिन्तालदण्डमादाय मनसाघटमुद्धर्त्तुमुद्यतं क्षिप्तमिव तमालोक्य चन्द्र-केतुर्द्रुतमेव तं धृत्वा सकोपमुवाच ।

किं करोषि रे दुर्मते ! त्वं पुनः सत्यं हतभाग्योऽसि । यदा तु देवतया सह विसंवादो लक्ष्यते तदा तेऽभीष्टसिद्धिर्मङ्गलं वापि नास्ति । भाग्येन मया गृहीतस्ते हिन्तालदण्डः, नोचेदचिरेणैव प्रमादो भवि-ष्यतीति । अपरे जनास्तिरस्कुर्वन्तस्तमूचुः, रे उन्मत्तप्रलापिन् हतबुद्धे त्वमेव किं देवीं मनसामाहन्तुमिच्छागतोऽसि, रे पाप दूरीभव ।

अन्येप्यूचुः, एष पाषण्डः कराभिघातैरभिहत्य गलहस्तो निर्वास्यतामिति । ततो मित्रभवनेपि साधुः सर्वैरेव तिरस्कृतोऽवमानितश्चाभूत् ।

सविषादं ततोऽरण्यं निर्जगाम वणिग्वरः ।
चिन्तयंश्चानिशं मेने विपत्तौ नास्ति मे गतिः ॥

अथ कान्तारान्तरे पथि वर्त्तमानः साधुस्तत्रागच्छतः कतिपयान् काष्ठोपजीविनो वनवासिनो विलोक्य सविनयं निजगाद, भो भ्रातरः के यूयं ब्रूत मे, क्व गन्तव्यं युष्माभिः सर्वैः, किं वः प्रयोजनं विद्यते इति । ते ऊचुः, काष्ठावहारिणो वयं गहनं गच्छामः, ततः काष्ठान्याहृत्य नगरे नगरे विक्रीय सप्ताष्टौ वा पणाः नित्यमेव अर्ज्जयित्वा जातिधर्म्मणास्माभिरुपजीव्यते । तदाकर्ण्य चन्द्रदासोऽब्रवीत् ।

यूयं मामनुगृह्णीत विजानीत बलीयसं ।
द्वयोरप्युचितं भारं वोढुं शक्नोमि साम्प्रतं ॥
तेप्यूचुस्तत् समर्थोऽसि कथं दुःखेन जीवसि ।
अस्माभिः सार्द्धमागच्छ स्वाभीष्टं काष्ठमाहर ॥
दुःखं नश्यति तेनैव सुखमेष्यिष्यते तव ।
एवमाश्वासितः साधुः काष्ठमाहर्त्तुमन्वगात् ॥
ततः शुष्काणि काष्ठानि समाहृत्य वनात्पृथक् ।
भारमेकैकमेतेषां जगृहुस्ते यथाबलं ॥
चन्द्रश्चन्दनकाष्ठानां भारमेकं दृढत्तरम् ।
गुणाभिज्ञतयाहृत्य बलाधिक्यतयाऽवहत् ॥
भारं तमेव सङ्गृह्य साधुरग्रे प्रधावति ।
रथस्था मनसा हृष्टा नेतां पप्रच्छ सादरं ॥
विचार्य्य ब्रूहि मे नेते किं करिष्यामि साम्प्रतम् ।
पश्य काष्ठानि विक्रीय साधुर्जीवितुमिच्छति ॥

सोऽयं लब्ध्वा जीविकां सुखदेशो गेहं गत्वा स्वेच्छया भर्त्सयेन्माम्।
तेताप्यूचे देवि किं विस्मृतासि ज्ञात्वाऽऽह्वानं मारुतिं प्रेषयस्व ॥

देव्याः स्मरणमात्रेण समागत्य मरुत्सुतः ।
प्रणम्योवाच देवेशि ब्रूहि किं करवाणि ते ॥
देव्यूचे मारुते पश्य स्वच्छन्दं काननान्तरात् ।
काष्ठमादाय विक्रेतुं याति लोकालयं वणिक् ॥
भारं न शक्यते वोढुं म्रियते नाप्यसौ यथा ।
तूर्णं कुरु तथा वीर यदीच्छसि मम प्रियम् ॥
यथाज्ञापयसीत्युक्त्वा बलेनारुह्य तच्छिरः ।
मारुतिः पीड़यामास तेनासौ घूर्णितोऽपतत् ॥
वाप्वापित्युच्चरन् साधु रुरोद सघनं श्वसन् ।
देवीश्च भर्त्सयामास यावत् क्लेशमवाप सः ॥
हंसाह्वतरथारूढा तच्छ्रुत्वा देव्यभाषत ।
नेते पश्याधुनैतेन कटूक्तिर्नापि विस्मृता ॥
भर्त्सयन् मनसां साधुर्भ्रमन्नथ वने वने ।
बुभुक्षावशतो गन्तुमशक्तो दुःखितोऽभवत् ॥

तस्मिन् वने ब्राह्मण एकदैकः कृत्वा पितुः आद्धमगात् स्वगेहम्।
तेनेक्षुखण्डं कदलीफलस्य त्वचञ्च साधुः पतितां ददर्श ॥
ात्वा क्षुधाक्षामतनुर्महेशं सम्पूज्य चक्रे बक्क गालवाद्यम् ।
टस्ततस्तद् बुभुजे समस्तं कृत्वाऽञ्जलिं तोयमपाच्च साधुः ॥

अमृतं चम्पकं मर्त्त्य मुत्तमं कदलीफलम् ।
क्षीरादिकमुपादेयं यस्य न प्रीतिदं पुरा ॥
तदानीं तादृशं तस्य कदलीफलवल्कलम् ।
मधुरायितमत्यन्तं कालस्य गतिरीदृशी ॥

तद्विप्रावासमागत्य ततोऽसौ तं न्यवेदयत्।
भो भूदेव शरण्योऽहमुपायातस्तवान्तिकम्॥
भवताऽन्नप्रदानेन पूरणीयं ममोदरम्।
दासवत्ते करिष्यामि कार्य्यं यदभिरोचसे॥
कृपया रक्ष मामत्र यापयामि कियद्दिनम्।
दैवेन हृतसर्व्वस्वः प्राप्तश्चाहं तवाश्रयम्॥
ततस्तं ब्राह्मणोऽवादीद्यदि दासत्वमिच्छसि।
मत्क्षेत्रं याहि धान्यं मे विलवणं कुरु साम्प्रतम्॥

तेनादिष्टः शस्यभूमिं प्रविश्य साधुर्दैव्या वञ्चितो वीतबुद्धिः। छित्वा शष्पं सारमुत्क्षिप्य धान्यं तस्य क्षेत्रं धान्यशून्यं चकार दृष्ट्वा क्षेत्रं शस्यपङ्क्त्या विहीनं रोषाविष्टो ब्राह्मणस्तं चपेटैः सन्ताड्योचे किं कृतं रे दुरात्मन् हा हा जातं यत्परं नास्ति दुःखम् स ताड़ितस्तेन रुदन्नुवाच रक्षां विपत्तौ कुरु मे महेश। एवं वचस्तस्य निशम्य विप्रः प्रोवाच दूरीभव पाप मूर्ख॥

अथैवं ताड़ितः साधुस्तं पुनः प्रतिनिन्दयन्।
श्वापदानां भयं त्यक्त्वा निर्ययौ गहनं वनम्॥
कर्त्तव्यताविमूढात्मा हृतज्ञानो हृतेन्द्रियः।
देशाद्देशान्तरं भ्राम्यन्नशेषं दुःखमासदत्॥

अथ चन्द्रदासस्य भवने सनकानाम तत्पत्नी पुनरन्तर्वत्नी जाताऽऽसीत् सा च गर्भभारमन्थरा पुनः प्रोषितस्य भर्तुरनागतवार्त्तया चिन्तापरा व्याकुला सातिशयदुःखिनी म्लानवदना सजलनयना सती सकातरं प्रियसखीमिदमुवाच। अयि प्रियसखि! अहो अभागिन्यहम् देशान्तरं प्रस्थित एव नाथः प्रत्यागताद्यापि न तस्य वार्त्ता। तच्चिन्तया व्याकुलितोऽन्तरात्मा निरन्तरं मां विकलीकरोति

साधोरेवापराधेन मनसा कुपितान्तरा।
जघान मम षट् पुत्त्रान् सखि सर्व्वगुणान्विताम्॥
षणां सुतानाञ्च वियोगदुःखं नाद्यापि मे तद्धृदयादपेतं।
नेत्राम्बुधारा नियतं पतन्ति सुखस्य लेशः सखि मे नचास्ति॥
पतिपुत्त्रविहीनानां शोकसन्तप्तचेतसाम्।
वधूनां मलिनं वक्त्रं दृष्ट्वा मे दह्यते मनः॥
पतिः प्रवासे किमु सिद्धकार्य्यो विडम्बितो वा विधिना न जाने।
अस्मिंस्तु वृद्धे वयसि प्रवृत्ते न सह्यते यातनमीदृशं मे॥
सत्त्वाधिष्ठानमारभ्य गर्भो मे पाञ्चमासिकः।
असुस्थं नियतं मन्ये शरीरं तेन मे प्रिये॥
अन्नपाने रुचिर्नास्ति शरीरे नास्ति मे बलम्।
किमयं जाठरो व्याधिः किमन्तःसत्त्वलक्षणम्॥
कैयद्दिनान्ते स्वसखीमुवाच सा विचार्य्य पूर्य्यःसखि मे मनोरथः।
था ससत्त्वा सुतभव्यकाङ्क्षिणी करोति पञ्चामृतपानभक्षणम्॥
न विद्यते रुचिर्वत्से जठरे त्वशनस्पृहा।
जायते किल नारीणामर्भके गर्भमागते॥
मधुरं पायसं पेयं मिष्टान्नं पिष्टकं दधि।
घृतभर्ज्जितशाकञ्च खर्परं नवमुत्तमम्॥
अन्नं पर्य्युषितं स्वादु दग्धमीनञ्च मत्प्रियम्।
श्वितं प्रियतरं तच्च तक्रञ्चेत् तत्र मिश्रितं॥
हिलमोचिकशाकेन सह दग्धवदालकः।
सरसं सफरीमत्स्यं सातिशयसुखप्रियम्॥
सुखसेव्यमिदं सर्व्वं भोक्तुं चेल्लभ्यते मया।
प्रतिग्रासं प्रियसखि मन्ये स्वर्गं करे धृतम्॥

एवमुक्ता सती चेटी सर्व्वं दौर्हृदिनीप्रियम् ।
द्रव्यमानीय सनकां भोजयामास सादरम् ॥
भुक्तापि स्पृहणीयभक्ष्यमखिलं साधोः प्रियायास्तदा
दौर्ब्बल्यं नियतं शरीरमलसं सन्तोषहीनं मनः ।
घर्म्माक्तं वदनं न कर्म्मसु रतिर्जृम्भा घनश्चाऽभवत्
सा गर्भाष्टममासलक्षणयुता चेत्थं परं कातरा ॥
अतीते नवमे मासि दशमे समुपस्थिते ।
क्षणमुत्तिष्ठते रामा क्षणञ्चोपविशत्यपि ॥
भग्ननिद्राऽस्थिरा भीता गर्भिणी वेदनाकुला ।
वाणीनिःसारणाशक्ता साऽभवद् व्याकुलान्तरा ॥
तामीदृशीं समालोक्य सत्वरं परिचारिका ।
समाहूतवती धात्रीं दक्षनार्य्युपदेशतः ॥

इति श्रीभगवच्चन्द्रप्रणीते वेङ्कलानखिन्दरे
मनसाकोपकार्य्यवर्णने प्रथमसङ्कलना ॥

---

# वेहुलानखिन्दरम्।

द्वितीयसङ्कल्पना।

अथ वृद्धाः स्त्रियः सर्व्वा गर्भवेदनयाऽऽकुलाम्।
तां समीक्ष्य समानिन्युः पुत्त्रप्रसवकेतने॥
ष्टह्विणी चन्द्रदासस्य सनका प्रसवोन्मुखी।
आगता सूतिकागेहे दासीधात्रीसमन्विता॥
दशमे मासि सम्पूर्णे चतुर्दशदिनाधिके।
प्रासूत सनका पुत्त्रं शुभलग्ने शुभे दिने॥
मनसाया वरेणैव जातो बालो नखिन्दरः।
शरत्पूर्णशशीवासौ शुशुभे भुवनोदितः॥
गर्भाशयाद्भूपतितस्य तस्य विलोक्य वक्त्रं सनका सुतस्य।
सकौतुकं वक्षसि तं निधाय सूनुं प्रसन्नेन्दुमुखी ललास॥
साधोः पुरे प्रतिगृहं निगदन्ति रामाः
पुत्त्रं पुनश्च सनका सुषुवे किमद्य।
सोल्लासवाक् कलरवः सहशङ्खनादः
संश्रूयते यदधुना सनकानिकाये॥
यद्घोषयन्ति पथिकाः पथि वर्त्तमाना
[illegible] समीयः।

द्रष्टुं तदीयभवने तनयं तदीयं
दृष्ट्वा च हृष्टमनसः स्वगृहं प्रतीयुः॥
पञ्चमेऽथ दिने जाते कुलकृत्यं तया शुभम्।
सम्पाद्यमिति निश्चित्य सर्व्वमायोजनं कृतं॥
व्यवहाराच्छुभे कार्य्ये कुलस्त्रीणां समागमः।
कर्त्तव्यश्चेति विज्ञाय प्रेषिता नापिताङ्गना॥
तया निमन्त्रिता नार्य्यः कुलधर्म्मानुसारतः।
आगता प्रतिवेशिन्यः सहर्षं सनकालये॥
ततस्ताः कुलकामिन्यः सुतस्यानन्दकर्म्मणि।
समाप्ते सति सोल्लासं प्रतस्थुः पुनरालयम्॥
पुनः षष्ठे दिने सायं शुभषष्ठ्यर्च्चनाविधिः।
करणीय इति ज्ञात्वा तस्योद्योगं चकार सा॥
द्रव्याण्यानीय सर्व्वाणि षष्टिसङ्ख्यानि शास्त्रतः।
कार्य्यं सम्पादयामास यथाविधि पुरोधसा॥
नार्य्यो नरा बालवयोधिकाश्चाजग्मुः पुनस्तद्भवनं रजन्याम्।
सम्मानिताः कर्म्मसमापनान्ते प्रत्युद्ययुस्ते च गृहं प्रफुल्लाः॥
ततः सा सनका रात्रौ संस्थाप्य प्रसवालये।
तालवृन्तमसिं पत्रं मसीपात्रञ्च लेखनीम्॥
धात्र्या सह जजागार क्रोड़े कृत्वा स्वबालकम्।
ललाटे लिखितुं धाता तदा तत्र समागतः॥
ललाटफलके तस्य स इदं स्वयमालिखत्।
विवाहवासरे सर्पान्मृत्युरस्य भविष्यति॥
वेहुला रमणी तस्य समादाय मृतं वपुः।
गत्वाऽमरपुरं साध्वी मनसा तोषयिष्यति॥

ईशाननन्दिनी देवी सम्प्रीता वेङ्कलां प्रति।
षण्मासानन्तरं तस्य जीवन्यासं करिष्यति॥
अभिप्रायेण तद् बालो करोद क्रोड़माश्रितः।
माता रोदनभावेण स्तनाग्रं तन्मुखे ददौ॥

जाते क्रमेणाथ वयःप्रमाणेनैकाधिके विंशदिने सुतस्य।
सा सूतिकागेहमपास्य रामा स्नानाभिषेकेण विशुद्धदेहा॥
अभ्यर्च्य देवीं पुनरेव षष्ठीं नारीसमेता गृहमाविवेश।
सतैललाजाकदलीफलानि स्त्रीभ्यो ददौ सा समुदं यथेष्टम्॥
यदा सुतं स्नेहवशेन भूमौ निधातुमङ्कात् सनका नचैच्छत्।
विलोकयन्ती सुतकान्तवक्त्रं तदैव सन्तोषमवाप रामा॥
स्तनाञ्च निद्रागतिसस्मितास्यः क्षणं शिशुः प्रस्फुरिताधरौष्ठः।
उत्तानशय्याशयितस्तदानीं चित्ते जनन्या मुदमाततान॥

तूर्य्ये मासि व्यतीते तु पञ्चमे समुपस्थिते।
सन्तुष्टा साऽभवद् दृष्ट्वा पार्श्वस्य परिवर्त्तनम्॥

षष्ठे ततो मासि वयःक्रमेण जाते शुभाह्ने सनका स्वपुत्रं।
साऽलङ्कृतं पट्टदुकूलशोभं सम्भोजयामास शुभान्नमादौ॥
यदा सखीभिः सह वाऽथ भर्त्त्यैश्चचार भूमौ स कृतोपजानुः।
प्रदर्शयन्नाशु विहस्य दन्तान् नितान्तमानन्दयतिस्म सर्वम्॥
जगन्नदं किञ्चन वक्तुकामो मुखेन तत्कारयितुं न शक्तः।
रामेति वर्णद्वयभाषणेन कदा स मातुः प्रमुदं ततान॥
स्तन्यप्रपानेन शिशोरुदन्या तथाशनाया शमतामुपैति।
मत्वेति साऽपाययत स्तनाग्रं रुदन्तमङ्के स्वशिशुं निधाय॥
चिरं रुदन्तं न विलोक्य शान्तं तं स्तन्यपानादिविचेष्टितेन।
[illegible]न्द्रं प्रदर्श्य प्रशमय्य तञ्च माताऽभवद्धर्षरसाभिषिक्ता॥

शिशुः कदाचिन्मुकुरं निरीक्ष्य तदीयरूपप्रतिबिम्बमात्रं।
ग्रहीतुकामः स्वकरं प्रसार्य्य सानन्दचित्तं स्वजनं चकार॥
यदा तु मात्राऽङ्गुलिग्टह्यमाणः प्रचोदितोऽसौ चरणप्रचारे।
एकं द्वयं वा क्षिपतिस्म पादं तदाऽभवत् तस्य मनः प्रफुल्लम्॥
क्रमेण बालः सबलो वयोधिकोऽधिकन्तु तत् खेलनदर्शनादिकम्।
ततोधिको रूपगुणश्च वर्द्धितो मातुर्भृशं मोदमवर्द्धयच्चिरम्॥
अथास्य चन्द्रस्य गृहे नखिन्दरो विवर्द्धमानः क्रमशस्ततःपरं।
कियद्दिनान्तेऽजनि सायदारिका धीरप्रशान्ता वसुधैकसुन्दरी॥
निशानिवासी वणिजां प्रधानः सद्व्यायसम्पत्तिबलेन धन्यः।
आसीत् सुशीलः स्वगुणैर्वरिष्ठः सायाभिधेयो भुवनप्रतिष्ठः॥

अमला सुन्दरी नाम तस्य भार्य्या गुणान्विता।
विष्णुन्यस्तहृदया रामा साध्वी पतिपरायणा॥
ऊषा वाणसुता याऽऽसीत् परिभ्रष्टा महीतले।
गुणलुब्धा सती सैवाऽमलाया गर्भमागता॥
नामतो वेङ्कला बाला सायकन्या मनोरमा।
शुभलक्षणसम्पन्ना पूर्णचन्द्रनिभानना॥
विद्युद्द्युतिमती श्यामा बिम्बाधरजिताकणा।
हरिणायतनेत्राभ्यां गञ्जनायितखञ्जना॥

वकुलकुसुममाल्यैर्वेष्टितः केशपाशः
मधुरतरसुगन्धामोदितं वक्त्रपद्मम्।
धवलदशनकुन्दश्रेणिरस्याश्च कान्ताः
चपलयत नितान्तं लुब्धचित्तं द्विरेफम्॥
कनकरुचिरवर्णा बिभ्रती कान्तमूर्त्तिं
विधृतविविधभूषा कोमलाङ्गी वराङ्गी।

प्रणयरसतरङ्गाकीर्णवापीव साऽभूत्
सरसमधुरवाणी मोहिनी शान्तचित्ता ॥
तिलपुष्पसमा नासा बभौ यस्या विशेषतः ।
भ्रूयुगं जितकोदण्डमुरोहारविराजितम् ॥
तारका इव शोभन्ते तत्र मुक्ता दिवानिशम् ।
मणिः शिरसि तेजस्वी फणिरत्नमिवाबभौ ॥
नृत्येन गीतेन सुशिक्षितेन मातुःपितुश्चैव मनो हरन्ती ।
सानन्दचित्ता स्वयमप्यजस्रं सा रञ्जयामास जनस्य चेतः ॥
एवं क्रमात्तौ परिवर्द्धमानौ सा वेहुला सोऽपि नखिन्दराख्यः ।
रूपेण शीलेन गुणेन जातावतिप्रियौ नागरनागरीणाम् ॥
अथ दैवहतश्चन्द्रः प्राप्य दुःखं यथोचितं ।
परिभ्रमन् मह्रारण्यं स्वदेशं साधुराययौ ॥
कन्थाचीरावृतश्चासौ लज्जितोऽचिन्तयत्तदा ।
प्रवेष्टुं सहसा गेहं नोचितं दिवसे मम ॥
यापयित्वा दिनं तावत्कदलीवनमाश्रितः ।
निभृतं रजनीयोगे प्रवेक्ष्यामि निजालयं ॥
चिन्तयन्त्या मनसा देवी विज्ञायास्य मनोरथं ।
पुनर्दुःखयितुं साधुमिच्छती कुपितान्तरा ॥
दैवज्ञरूपमाश्रित्य विवेश सनकागृहम् ।
अपूर्व्वतिलकं भाले कक्षसम्भृतपुस्तकं ॥
आगतं गणकं दृष्ट्वा दत्वा पीठासनं सती ।
तं गणयितुमभ्यर्थ्य विप्रं पप्रच्छ मङ्गलम् ॥
प्रर्थितोऽसौ कठिनीं प्रपात्य प्रोवाच भद्रे वसतौ तवाद्य ।
ो हि चौरो भृतचीरवासा रात्रौ समायास्यति भीममूर्त्तिः ॥

अमात्यवर्गान्वितया त्वया पुनः सतर्कयोपस्थितया वनान्तिके।
यदा विलोक्येत स धृष्टचौरः धृत्वा प्रहर्तुं स हि युज्यते तदा॥

इत्युक्त्वा प्रस्थिते तस्मिन् विप्रे साधुनितम्बिनी।
चौरमुद्दिश्य सा तत्र सावधाना स्थिताऽभवत्॥

यथाभिमन्त्रितं साधुरथाभ्यागत्य काननात्।
अभिश्रयन्निजोद्याने कदलीपादपान्तरम्॥

क्षणे क्षणे ददर्शान्तरङ्गने पादपान्तरात्।
दृष्ट्वा खेलान्वितं पुत्रं पुनरन्तर्हितोऽभवत्॥

अथ दासी वनं गत्वाऽपश्यत्तस्य तदाकृतिम्।
ऊचे च सनकामेत्य कोऽपि पापोऽस्ति कानने॥

तच्छ्रुत्वा सनका तूर्णं समेत्य तद्वनान्तिकं।
खसखसं शब्दमाकर्ण्याऽकृत चौरस्य निश्चयं॥

ततः साऽऽज्ञापयामास भृत्यं भोजनिवासिनम्।
पश्य भृत्य द्रुतं गत्वा कोऽस्ति मे कदलीवने॥

अथो बलिष्ठः सनकानुमत्या तदीयभृत्यो वनमुत्पपात।
दृष्ट्वा च चौरं स्वकरेण धृत्वा पदा चपेटेन तमाजघान॥
रात्रिप्रभावाच्च वनप्रभावात्तमःप्रभावेण हृतप्रभोऽयं।
लज्जावनम्रः शवचौरवासःसमावृताङ्गो बुबुधे न तेन॥

यदा चाभिहतः साधुर्लोकास्तत्र समागताः।
शुश्रुवुस्तन्मुखाद्वाचः क्षमस्वेति न मारय॥

जना न चौरं नच दुश्चरित्रं जानीत मां साधुमिति ब्रुवाणं
आलोकमानीय विलोक्य चैते तच्चन्द्रदासो विविदुस्तदेति॥
निरीक्ष्य साधुं स्वजनाः सुदुःखिता निन्युस्ततस्तं स्वगृहं समादृ
सस्नेहवाचा परितोष्य तं पुनः प्रतस्थिरे ते भवनं ततःपरम्॥

लानं मुखं तस्य ततो निरीक्ष्य सशोकलज्जा सनका नितान्तम्।
नीराकुलाक्षी पतिमित्यवादीत् विरूपहेतोर्वद ते विशेषम्॥
साधुस्तथैवं कथितः स्वभार्य्यया सगद्गदं वाक्यमुवाच कातरः।
यावच्च दुःखं मम लक्ष्यते प्रिये ततावगम्यं मनसैव कारणम्॥
यदाम्बुराशौ तरणी निमज्जिता विलोक्य भीत्या निपपात पाथसि।
नासापुटेनास्यपथेन चाऽभवं पयःप्रवाहैः परिपूरितोदरः॥

ततस्तीरं समुत्तीर्णो दैवात् सम्प्राप्य भेलकम्।
अहं चौरात्ततो जातो नग्नो नारीप्रबोधनात्॥
पश्चाद् ग्राममरण्यञ्च परिभ्रम्य निरन्तरम्।
यावत् कष्टं मया लब्धं तत्प्रवक्तुं न शक्यते॥
स्वदेशमागतः पश्चात्तत् क्लेशोपशमाशया।
प्रवेष्टुं सहसा गेहं कुण्ठितो लोकलज्जया॥
यापयित्वा दिनं यावत् प्रवेक्ष्यामि गृहं निशि।
मनसीति विचिन्त्यैतत् कदलीवनमाश्रितः॥
अत्रापि तव भृत्येन ताड्यमानो यथाबलम्।
शक्नोमि न स्वयं गन्तुं जातोऽहमवशेन्द्रियः॥

श्रुत्वेति वाचं सनकातिकातरा नेत्राम्बुधारापतनाकुला सती।
वेदयत्तं प्रणिपत्य पादयोरतःपरं शान्तमतिर्भव प्रभो॥
देन देव्या सह सर्व्वदैव लब्धं त्वया केवलमात्मदुःखम्।
तो विवादो भवता न युक्तः कर्त्तुं पुनर्देवतया सहैवम्॥
ष्टा स्वयं या विदधाति भोगं रुष्टा सती नाशयति क्षणेन।
क्प्रभावं नियतं विदित्वा तस्याः पदाब्जं भजसे न कस्मात्॥
त्वेति क्रुद्धो वचनं तदीयमूचे स तां शोकविदग्धचेताः।
तत्प्रसङ्गं कुरु मत्समक्षे सा पापिनी सर्व्वविनाशिनी मे॥

दृष्ट्वा मुखं तस्य क्षपापरीतं प्रसादनार्थं सनका पुनश्च।
उवाच नाथं विनयार्द्रवाचा निबोध साधो मम पूर्ववृत्तम्॥
सहायहीनां किल मां ससत्त्वामुत्सृज्य यातोऽसि चिरं विदेशम्
विचिन्त्यमानेन महेश्वरेण सुदुःखितापीह सुरक्षिताऽस्मि॥
अहं हि नारी गृहपिञ्जरस्था दैवेन वा धीरधियाऽऽत्मशक्त्या
असह्यकष्टं परिसह्य सर्वं नखिन्दरं सूतवती सुपुत्रम्॥
तदिन्दुकल्पं सुतवक्त्रमेतद्दृष्ट्वा न ते किं हृदयं प्रफुल्लम्।
उक्तेति रामा तनयं गृहीत्वा समर्पयामास पतिं करेण॥
निरीक्ष्य पुत्रस्य मुखं ततो वणिक्‌विसृज्य शोकं स समुत्सुकोऽभवत्
सहर्षमङ्के सुतमेनमाददे ततश्चुचुम्बे च तदीयमाननम्॥
क्रमेण पुत्रस्य समेधितेन स्नेहेन संविस्मृतपूर्वदुःखः।
प्रशान्तचित्तोऽगमयत् सुखेन कालं कियन्तं स हि चन्द्रहासः
अथास्य पुत्रस्य नखिन्दरस्य कियद्दिनान्ते शुभकर्णवेधम्।
सम्पादयामास पुरोहितेन यथाविधानं स कृतप्रयत्नः॥
अभ्यस्य बाल्ये पठनीयशास्त्रं विद्यार्जिता तेन नखिन्दरेण।
वाणिज्यकार्ये क्रमशोऽनुरागात् जाता ततस्तस्य विशेषशिक्षा
तौर्य्यत्रिकाभिज्ञगुरूपदेशात् सुशिक्षितस्ताण्डवगीतवाद्ये।
आनन्दयद्देवनलीलयाऽसौ प्रमोदसंसर्गिवयस्यवर्गम्॥
व्यायामाभ्यसनं कृतं प्रतिदिनं तेनाथ मल्लैःसह।
नित्याभ्यासवशेन तन्निपुणताट्ठिस्ततोऽजायत॥
दुर्ज्ञेया मल्लिनो जिता बलवता दोर्णाश्च तेन स्वयम्।
तेनासौ कथितो नखिन्दर इति व्यायामदक्षैर्जनैः॥
यदा वयस्यैः सह युध्यमानो जिगाय तान् बाहुबलेन सोऽयम्
ज्ञात्वा तदेतत् पितरौ तदीयौ ननन्दतुः शौर्य्यगुणेन तस्य॥

दिनेषु गच्छत्सु नखिन्द्रोऽसौ प्राप्तः परं यौवनकान्तरूपम् ।
विद्यार्ज्जनाल्लब्धविशुद्धबुद्धिः सर्व्वेषु कार्य्येषु विचक्षणोऽभूत् ॥
पाणिग्रहे योग्यसुतं ततोऽसौ समीक्ष्य साधुः सनकामुवाच ।
पुत्त्रस्य नौ दारपरिग्रहार्थं कन्या सुरूपा हि गवेषणीया ॥
सौभाग्यभाक् सर्व्वगुणेन गण्या कन्या भवेद्या कुलसुन्दरीषु ।
अन्विष्यतां वै सविशेषयत्नं सा साम्प्रतं सर्वकुलस्थलद्भिः ॥
सा तं बभाषे शृणु नाथ कन्यामेतादृशीमप्यवधारयस्व ।
पुत्त्रस्य मे सर्वगुणान्वितस्य पाणिग्रहे या हि भवेत् सुयोग्या ॥
अतस्तु कन्यापरिदर्शनार्थं पुरोहितं प्रेषय नाथ नूनम् ।
विज्ञाय साधुः सनकाभिलाषं समाह्वयन्तं हि जनार्दनाख्यम् ॥

ततः समागतं गेहे जनार्द्दनपुरोहितम् ।
पीठं निवेश्य चाभ्यर्च्च्य तं साधुरित्यभाषत ॥
त्वं पुरोहित मे कार्य्यं यथासाध्यं शुभाशुभम् ।
सम्पादयसि यत्नेन त्वं हि मे हितकारकः ॥
अतो निवेदयामि त्वां विवाहार्थं सुतस्य मे ।
अनुसन्धीयतां कन्या सुन्दरी या मनोरमा ॥

पुरोहित उवाच ।

जानाम्येकं धनाढ्यं धनपतिसदृशं साधुदत्ताभिधेयं
जाने नैतद्विशेषं किमुपरिणयने विद्यते तस्य कन्या ।
तस्यावासः सुदूरस्तमहमपि तव प्रीतये गन्तुमीहे
चन्द्रस्तुष्टस्तदुक्त्या समुचितवसुना तर्पयामास विप्रम् ॥
अर्थप्राप्तिप्रभावादपि विनयवशात् साभिलाषं पुरोधाः
साधोः सद्म प्रतस्थे सुचतुरघटकं विप्रमेकं गृहीत्वा ।

दृष्टाऽऽयातौ द्विजौ ताववनतशिरसा साधुदत्तः प्रणम्य
भक्त्याऽपृच्छत् भवन्तौ कथमिह वदतामागतौ विप्रवर्य्यौ ॥

विप्रावूचतुः।

कन्या विवाह्या भवतो हि विद्यते
श्रुत्वाऽऽगतौ तद्वद नौ वणिग्वर।

साधुदत्त उवाच। 178120

विवाहयोग्या तनया न मे गृहे
श्रुतम्मया सायसुतास्ति सुन्दरी ॥

तस्याथ साधोर्वचनं निशम्य यातौ ततः सायनिकेतनं तौ।
समागतौ विप्रवरौ विलोक्य समादरेणार्चितवान् स सायः ॥

आगतौ ब्राह्मणौ दृष्ट्वा वेङ्कला प्रणिपत्य तौ।
तयोः पादरजोऽगृह्णाच्छिरसा भक्तितत्परा ॥
अवगुण्ठनहीनां तामालोक्य घटकोऽब्रवीत्।
वृथं ते दुहिता साय नन्वदत्तेव लक्ष्यते ॥
सत्कुलाय सुशीलाय वरपात्राय कन्यका।
कथं न दीयते साधो कालक्षेपं करोषि किम् ॥
त्वमत्र वणिजां नाथ प्रधान इव गण्यते।
न द्वन्द्वोद्वाहमीदृश्या भर्त्ता ते रोचते कथम् ॥
एवं निवेदितः सायः प्रणम्योवाच तं द्विजम्।
कन्यां दास्ये वरो देव सत्पात्रो यदि लभ्यते ॥

प्रत्यब्रवीत्तं घटकस्तदानीं वाक्यं हितार्थं शृणु सावधानः।
चन्द्राभिधः साधुरहो महात्मा सुविश्रुतश्चम्पकदेशवासी ॥
कुलेन शीलेन धनेन साधो नचास्ति न्यूनो भवता सहाऽयम्।
नखिन्दरस्तस्य सुतः सुशीलः सर्व्वाङ्गसौन्दर्ययुतः सुपात्रः ॥

जिता मही तेन वणिक्सुतेन बुद्ध्या च विद्यागुणगौरवेण।
रूपेण कामो विजितोऽमराणां गुरुर्जितो वाक्पटुताविशेषैः॥
तस्मै सुशीलाय वराय कन्यामिमां सुरूपां यदि दित्ससि त्वम्।
तद्ब्रूहि मे साय तयोः करिष्ये सम्बन्धबन्धं हि परस्परस्य॥
सायः सहर्षं तमुवाच देव यद्येष पात्रस्तव सम्मतः स्यात्।
विप्रस्य सम्यग्गणकेन सार्द्धं जानीहि राश्योः शुभलक्षणं तत्॥

ततः पुरोगतो वणिग्वरेण योजकद्विज-
स्तथा निवेदितस्तदा प्रमोदमागतोऽभवत्।
तदाज्ञया समागतो ग्रहद्विजो व्यजीगणत्
कुमारकन्ययोस्तयोर्विवाहमेलनं ततः॥
अथाभ्यभाषत द्विजः शुभं गणादिकं द्वयो-
स्तदीरितं यथायथं मनीषिणां मतं वचः।
निशम्य साहसान्वितो बभूव योजकद्विज-
स्ततः स तं कुतूहलात् वणिग्वरं न्यवेदयत्॥

तस्मै सुतामर्पय साय वेङ्कलां विवाहयोगो मिलितो यतः शुभः।
श्रुत्वा तदीयं वचनं प्ररोचनं जगाद सायो घटकं मनोगतम्॥
ज्ञातो मया चम्पकदेशवासी स चन्द्रदासोऽर्ज्जितरत्नराशिः।
ततः पुनः सर्वगुणेन युक्तः प्रियम्बदस्तस्य सुतोऽस्ति धीरः॥
वाचाऽनया ते परितोषितोऽस्मि सहर्षमेतस्य सुताय दास्ये।
मदीयकन्यामिति निश्चयो मे गत्वा द्रुतं चन्द्रमिदं ब्रवीथाः॥
श्रुत्वैव सायाभिहितं द्विजौ तौ प्रीतौ ततः पूर्णमनोभिलाषौ।
देशमाजग्मतुरादरेण सायस्य सन्देशमवाप्य तूर्णम्॥
प्रविश्य साधोर्भवनं तदा तौ ब्रूतः स्म तस्मै शुभमेव सर्व्वम्।
सोऽथ साधुः प्रतिपूज्य विप्रौ ब्रूतं विशेषाद्भवदीयवृत्तम्॥

जनार्दनो विप्रवरः पुरोधास्ततः सहास्यमिदं बभाषे।
पूर्वापरं यावदुदन्तजातं संश्रूयतां तद्घटकस्य वक्त्रात्॥
पुरोहितस्याभिमतं विदित्वा शुश्रूषयोत्कण्ठितचेतसं तम्।
चन्द्रं स्वपत्न्या सह वर्त्तमानं प्रशान्तचेता घटको न्यगादीत्॥
आदौ तवादेशमवाप्य चन्द्र दत्तस्य साधोर्निलयं प्रविश्य।
तमब्रुवं दत्त भवन्निकाये कन्यास्ति ते कापि विवाहयोग्या॥
दृष्टो मया साधुरसौ सुशीलः प्रोवाच कन्या मम नास्त्यदत्ता।
याऽस्त्येव सायस्य गृहे निशान्ते सा विश्रुता रत्नमिवास्य कन्या
सुश्राव्यमेतद्वचनं निबुध्य द्रुतं निशानावगमं सहर्षम्।
गत्वा गृहं तस्य ददर्श कन्यां विवाहयोग्यां कमनीयकान्तिम्॥

दृष्ट्वा सायसुतामथोऽब्रुवमिदं कन्या मया लभ्यतेऽ
दत्ता साय वयोधिका कथमसौ दातुं त्वया नेष्यते।
सायोऽभाषत भाषितं हि भवतो युक्तं मया मन्यते
सत्पात्रो यदि लभ्यते कुलवते तस्मै सुता दास्यते॥

अवसरमुपलभ्योवाच तं साय शीघ्रम्
स्पृहयसि यदि चित्ते सम्प्रदातुं कुमारीम्।
समधिकपरितोषाच्चन्द्रपुत्त्राय देहि
स भवति गुणिगण्यो माण्यवंशप्रसूतः॥
निगदितवचनं मे स्वीचकाराशु सायः
परमसुखितचित्तोऽतोषयन्मां च भक्त्या।
तदनुनयगिराऽहं प्रीतियुक्तोऽस्मि प्राप्तः
शुभपरिणयबन्धव्यग्रचित्तं भवन्तम्॥
घटकवचनतुष्टश्चन्द्रदासः सभार्य्य-
स्तनयशुभविवाहोत्साहशीलो बभूव।

तदनु च सनका स्म सादरं हर्षयुक्ता
प्रणिगदितवती तं कीदृशी सा कुमारी ॥
या सुन्दरी सुरपुरीमपहाय रामा
स्वेच्छागतेव वसुधामुपभोक्तुकामा ।
पद्मालयेव हृदयङ्गममूर्त्तिरेषा
विद्याधरी किमु धराधरराजकन्या ॥
या कामिनी प्रणयिचित्तविनोदहेतु-
र्या काशते रुचिरकाञ्चनवल्लरीव ।
यस्या निशाकरविनिर्मलकान्तमास्यं
हास्यं तडिद्विकसितप्रतिमानमेव ॥
गत्या जिता गजगणाश्च मरालपङ्क्ति-
र्नृत्येन स्वर्युवतयो विजिता यया च ।
वासन्तिकाः पिकगणा मधुरस्वरेण
निश्वाससौरभहृतादरमञ्जभञ्जं ॥
चक्षुः सरोरुहयुगं सममीक्ष्यमाणः
पर्य्याकुलो मधुकरो मकरन्दलोभात् ।
यस्याश्च भालनिहितस्तिलकच्छलेन
संराजते परमसुन्दरनीलकायः ॥
पुण्ये दिने विधिविशेषतिथौ च बाला
देवार्च्चनापरतया प्रथितप्रतिष्ठा ।
नार्य्यो यया नियमितं व्रतमाचरन्त्या
भग्नादराः किमपरा व्रतपालयन्त्यः ॥
संश्रूयतामवहिता सनके वचो मे
धीशक्तिरूपगुणगौरवशालिनीषु ।

इत्थं हि या निरुपमा भुवनाङ्गनासु
सा ते भविष्यति वधूर्घटकोऽवदत्तां ॥
पुत्त्रस्तवायं प्रकृतप्रशंस्यो योग्या तथा सायसुतास्ति तस्य ।
मन्ये विधात्रा कृत एष योगः शुभं फलं तेन फलत्यवश्यं ॥
तत् सायकन्यावदनारविन्दसन्दर्शनार्थं गमने विलम्बः ।
कदापि ते नोचित इत्युवाच चन्द्रं तदानीं घटकः पुनश्च ॥
वैवाहिकत्वेन स सायदत्तः सम्भाषणीयो भवताऽचिरेण ।
"शुभस्य शीघ्रं" प्रवदन्ति धीरा वाक्यं तदेतत् सफलं कुरुष्व
प्रचोदितस्तद्वचनेन चन्द्रः संगृह्य वस्त्राभरणं सुरम्यम् ।
मिष्टान्नजातञ्च यथाभिलाषमगात्ततः सायनिकेतनं सः ॥
पुरोहितोऽसौ घटकश्च विप्रौ सहर्षमेतौ तमनुप्रयातौ ।
साधुर्यदा तस्य पुरं विवेश प्रत्युद्ययौ तं विनयेन सायः ॥
आत्तोपचारोपचयस्ततोऽसौ तेभ्यो ददौ सादरमासनानि ।
सम्भाष्य पश्चाच्च परस्परेण प्रफुल्लचित्तौ भवतस्ततस्तौ ॥
सायं पुनः साधुरिदं बभाषे त्वं मे हि वैवाहिकतोपयुक्तः ।
श्रुत्वा गुणौघं भवतः सकाशं कौतूहलेन स्वयमागतोऽस्मि ॥
त्वं मे कुटुम्बोऽभिनवो भवेति चित्तेऽभिलाषोऽस्ति शपामि तुभ्यं
कुटुम्बिता मे भविता सुखेन सार्द्धं त्वया शुद्धधिया हि साय ॥
चन्द्रं ततोऽसौ निजगाद सायः साधुः कुटुम्बो हि भवेत् सुखाय
सम्बन्धबन्धो भवता सहायं प्रमोदहेतुर्भवतीह मन्ये ॥
अतो ब्रवीमि ते चन्द्र त्वत्पुत्रो यो नखिन्दरः ।
दास्यमानां सुतां तस्मै वाचाहं साम्प्रतं ददे ॥
सुचतुरघटकोऽसौ सायवाक्ये निवृत्ते
शुभपरिणयवन्धं बद्धमूलं प्रणेतुम् ।

उभयवचनसाक्ष्ये पत्रमेकं तुलस्याः
करतलपरिवर्त्तं कारयामास ताभ्याम् ॥

विवाहसम्बन्धविधौ स्थिरीकृते हासोपहासावुदितौ यदा मिथः ।
उवाच चन्द्रः स्वमनोगतं तदा हर्षोदये यच्च विषादकारकं ॥

पक्तुं लौहकलायकं गुणवती शक्नोति या कामिनी
सा मे साय वधूर्भविष्यति सती सैषा प्रतिज्ञा मम ।
सायः प्रत्यवदत् किमद्भुतमिदं त्वं भाषसे मत्तवत्
लौहः किन्नु विपच्यते कृतधिया न ज्ञायते तत्त्वया ॥

अमलोवाच तच्छ्रुत्वा पापबुद्धे किमुच्यते ।
किं समर्था भवेत् कापि मानुषी लौहरन्धने ॥

त्वया पुनः कराठनिविष्टयाऽसौ प्रचोदितो वाचमुवाच सार्द्धं ।
जिज्ञास्यतां त्वत्तनया त्वया तत् विज्ञायतामत्र मतञ्च तस्याः ॥

सोऽन्तःपुरं प्रतिगतो रमणीरवादीत्
किं वेहुला मम सुता भविता समर्था ।
पक्तुं कलायमयसः पणितं विवाहे
श्रुत्वा तदूचुरचिरं तमिदं रमण्यः ॥

मृ निर्वंशविप्रो घटको दुराशय आगत्य सम्बन्धमचेष्टयत् कथम् ।
अयं हि मत्तो वणिजां कुलाधमो ब्रवीति पापः किमसङ्गतं वचः ॥

[illegible]च क्रन्दन्त्यथ सायपत्नी कन्याकरं स्वीयकरेण धृत्वा ।
[illegible]र्पितस्ते विधिना ललाटे वत्से न किं सत्कुलपात्रलाभः ॥

[illegible]धनार्थं प्रतिवाचमूचे तां वेहुला स्मेरमुखी प्रसन्ना ।
[illegible]क्रन्द मातर्मम विस्मयो मे लौहं कलायं गलितं करिष्ये ॥

[illegible]न्वितायाश्च तिथेः प्रधानं मासव्रतं या कुरुते कुमारी ।
[illegible]ति सा सिद्धिमिमं कलायमेतद्व्रताचारफलं निबोध ॥

उशीरमूलं कतिमुष्टिसङ्ख्यं स्थालीशरावादिकपात्रमामम्।
आनीय संस्थापय शीघ्रमम्ब सरोवरे स्नातुमहं व्रजामि ॥
ध्यानेन तत्त्वं मनसा विदित्वा सा वेङ्कला यत्र तथा जगाम।
सुपक्वकेशा धृतहृद्यवेशा भूदेवपत्नी मनसा तदानीं ॥
तत्रैवासीत् सुन्दरं सायगेहं क्रीड़ोद्यानं निर्म्मितं तत्समीपे।
रम्यं हर्म्यं तस्य मध्योपशोभं द्वारैर्युक्तं तच्च सोपानपङ्क्त्या ॥

प्राचीरवलयैरुच्चैस्तच्चतुर्दिक्षु वेष्टितम्।
हृष्टहृदायतनं तच्च सुप्रशस्तमदृश्यत ॥
शाखापल्लविर्तैर्वृक्षैः कलनादैर्विहङ्गमैः।
नानाजातिभिरुद्यानं विशेषेणैव सेवितम् ॥
कोकिलानां कलध्वानैर्नादितं सामगैरिव।
फलमूलाशिनां तच्च वासयोग्यं मनोरमम् ॥
विरेजुर्विविधा मार्गाः प्रादक्षिण्यक्रियाविधौ।
गिरिमच्चूर्णसम्पूर्णास्तत्र ते सर्व्वतोमुखाः ॥
तेषामुभयपार्श्वे च पुष्पोपवनशोभिते।
विकसत्कुसुमामोदैर्व्याप्तास्तत्र चतुर्दिशः ॥

तन्मध्यभूमौ चतुरस्रनिर्म्मिते सरोवरे घट्टचतुष्टयावृते।
विचित्रपाषाणनिवेशकौशलात् सोपानराजी विरराज भास्वर
काचोपमं यत्र सुचारु निर्म्मलं नीरं सुदृश्यं वसुधासुधानिभम्
गुञ्जत्सुधापानप्रमत्तषट्पदनिषेविताम्भोरुहराजिराजितम्
सा छद्मना पद्मपलाशचक्षुरलक्ष्यरूपेण सुलक्षणाङ्गी।
क्षणेण सोपानसमीपदेशे तस्योपविष्टाऽभवदेव देवी ॥
सरोवरेऽत्राथ सुधीरगत्या सा वेङ्कला स्नातुमुपस्थिताऽऽसी
तत्तीरघट्टं परितो विलोक्य जले सलीलं निपपात वाला ॥

ऊर्म्मं प्रदाय पतिता सलिले यदासौ
तत्पार्ष्णिनिःसृतपयःकणिका तदीये।
गात्रेऽपतत् खलतयेति रुषान्विता सा
वृद्धा प्रकाश्य निजरूपमभाषतैनाम्॥
निजपार्ष्णिजलं दत्त्वा यतो मामवमन्यसे।
अतोऽभाग्यवती भूया रूपलावण्यगर्व्विणि॥
वृद्धगर्व्वैण किमीदृशेन जातस्तवायं नयनावरोधः।
न लक्ष्यते कापि च माननीया किं देवता किञ्च धरामरस्त्री॥
वेङ्कलोवाच।
किमेवं भाषसे वृद्धे गिरा कटुकया मृषा।
सम्भावयसि वा मे त्वं किमहङ्कारलक्षणं॥
वृद्धा सत्युग्रमूर्त्तिरवदत्।
कथं ते पार्ष्णिजातेन जलेनार्द्रीकृता मम।
तनुरेषा प्रवीणायास्तत् किं मे नावमाननम्॥
तां वेङ्कलाऽब्रवीद् वृद्धां त्वं सतीव न लक्ष्यसे।
निजदोषमनालोक्य दोषिणीं भाषसेऽपरां॥
अहमग्रे जले मग्ना त्वन्त्विदानीमुपस्थिता।
वर्षीयसि कथं गात्रे लग्नं ते सलिलं भवेत्॥
ततो वृद्धा सती शान्तमूर्त्तिः प्रत्युवाच। भवतु तावदेष ममैव
दोषः न पुनर्भवतु विवादोऽस्मादृश्योरेतादृशः।
कस्याश्चिदपि वृद्धाया वयोदोषप्रभावतः।
न तस्या वाङ्नवा बुद्धिः सम्यक् स्फुरति सर्वदा॥
तदेहि भद्रे मधुरभाषिणि हरिणायतलोचने आवामुभे निम-
ज्जावो जले प्लवावो वा परस्परं कौतुकेन का च किमुत्थापयितुं

शक्नोति स्वहस्तेनेति। तयोक्ता वेङ्कला बाला बालिकास्वभावात् मनसा-प्रभावाद्वा तत्त्वणात्तदुक्तौ सम्मता सत्युवाच। यदेव मन्यते भवतीति।

ततो निमग्नयोस्तोये पुनरुत्थितयोस्तयोः।
इच्छाया उत्थितः शङ्खः करे तस्यास्तु कङ्कणम्॥
तद्दृष्ट्वा परितप्तैव शशंस ब्राह्मणी ततः।
ब्राह्मणीं मामवज्ञाय किं शूद्रा लब्धकङ्कणा॥
अतो हतो भवेत् पतिर्विवाहवासरे तव।
शपामि वेङ्कले ततः प्रसादमित्यपं ददे॥
स जीवितो भवेत् पुनः स्तवेन भासितस्त्वया।
भुजङ्गमातरं यदि प्रसादयिष्यसि स्वयम्॥
पक्तुमर्हसि बाले त्वं कलायं लौहनिर्मितम्।
इत्युक्त्वाऽन्तर्हिता देवी वेङ्कला तदनन्तरम्॥
इयं सा ब्राह्मणी दृष्ट्वा मनसेति व्यचिन्तयत्।
क्वासौ गतेति संचिन्त्य क्रन्दन्ती वेङ्कला तदा॥
जलादुत्थाय भवनं प्रत्यागत्य ततःपरम्।
महानसे चकारासौ चुल्लिनिर्म्माणमुत्तमम्॥
षट्काकिनीमितान् नीत्वा कलायान् लौहनिर्मितान्।
ध्यात्वा सा मनसादेवीं पाकं कर्तुं प्रचक्रमे॥

प्रज्ज्वाल्य चुल्लिं स्वयमेव रामा स्थालीशरावौ च ततो निधाय
उशीरसार्द्धद्वयमुष्टिकेन यत्नेन सञ्ज्वालितयोल्कयासौ॥
निमेषसार्द्धद्विकमेव कालं सम्यङ्मुदा पक्ववती कलायान्।
सुस्विन्नमन्नं विहितं यथा स्यात् लौहः कलायो गलितस्तथैव।
विलोक्य साधुर्गलितं कलायं कन्याचरित्रञ्च पवित्रमेव।
पतिव्रताऽसाविति मन्यमानो निर्णीतवान् पुत्रविवाहलग्नम्॥

म्भाप्य सार्थं तत एष साधुः हर्षेण चम्पानगरं प्रतस्थे ।
र्हं समागत्य सहर्षचित्तः सर्वं यथावत् सनकामुवाच ॥
निशम्य तत्त्वं सनका वभाषे शोकं पुनः सोढुमशक्नुवाना ।
ोतास्मि ते देवतया विवादात् कुर्य्यादतः किं मनसा न जाने ॥
पापबुद्धिर्वनितां वचोभिर्देवीं रुषा ताश्च तिरश्चकार ।
न्तालदण्डञ्च करेण धृत्वा जगाद भङ्क्ष्यामि भुजङ्गमुण्डम् ॥

प्रबोधयितुकामा सा कामिनी स्वामिनं ततः ।
शोकार्त्ता वक्तुमारेभे विनयेन यथोचितम् ॥

न्ये विधाता लिखितं ललाटके साधो नितान्तं तव वंशनाशनम् ।
खण्डनं तल्लिखनं विधेर्यतस्ततस्त्वमेवं हतधीरधीरसि ॥

सह देवतया वादो जातो येषां कृतागसाम् ।
वंशनाशोऽभवत्तेषां दैत्यदानवरक्षसाम् ॥
यथा बलेन नीतायाः सीतायाः कोपवह्निना ।
सवंशो रावणो वीरो दग्धोऽभूद्रक्षसां पतिः ॥
तथा निशुम्भशुम्भौ द्वौ भ्रातरौ सुरविद्विषौ ।
मायारूपधरां देवीं विशालाक्षीं हिमाचले ॥
ग्रहीतुकामौ कामेन दानवौ बलगर्वितौ ।
सवंशेन क्षयं नीतौ देव्या रोषप्रभावतः ॥
एवं देवविरोधाग्निदग्धसारा महासुराः ।
दृढदंशाः स्ववंशेन हता अन्येपि भूरिशः ॥
हिरण्यकशिपुर्दैत्यो हिरण्याक्षो महाबलः ।
उग्रसेनसुतः कंसस्तथा तौ मधुकैटभौ ॥
यतस्तेपि हता शूराः कुतस्त्वं दुर्ब्बलो नरः ।
इति विज्ञाय मतिमन् शान्तचित्तो भवाधुना ॥

एतावत् सनका नारी प्रबोधार्थं वणिक्पतेः ।
सप्रमाणं वचः सर्व्वमुवाच हितकाङ्क्षया ॥
हिताशया यत्तयोक्तं नाऽसौ मेने हितं हि तत् ।
न रोचते हितं पथ्यं यथैवापथ्यसेविने ॥
हतबोधो वृथा साधुर्न प्रबोधममन्यत ।
वरमूचे च सा काणी पुनः किं मे करिष्यति ॥
मत्सुतस्य शुभोद्वाहे सावधानोस्मि साम्प्रतम् ।
तद्वासभवनं कुर्य्यामतो लौहमयं दृढम् ॥
ततस्तद्गृहनिर्म्माता विश्वकर्म्मा तदाज्ञया ।
किङ्करेण समानीत उपतस्थौ तदन्तिकम् ॥
अथासौ मनसाभीतिनिरासार्थं कृताशयः ।
विसृज्य कृतकर्म्माणं विश्वकर्म्माणमादिशत् ॥
गच्छ भोः कर्म्मकर्त्तृणां मम सान्तालिपर्व्वतम् ।
एकं लौहमयावासं निर्म्माहि यत्नपूर्व्वकम् ॥
पिपीलिकादयः कीटाः प्रवेष्टुं तव केतने ।
यथा नार्हन्ति तद्रूपं कुरु निर्म्माणकौशलम् ॥
निबोध कारणं तस्य पुत्त्रा मे फणिना हताः ।
मनसाया विरोधेन भीतचित्तोऽस्मि सर्वदा ॥
अतो लौहमये गेहे तस्या भीतिप्रशान्तये ।
पुत्त्रं बधूसमेतं मे निर्विघ्नं स्थापयाम्यहम् ॥
प्रतिश्रुत्य ततः सर्वं गृहनिर्म्माणसाधनम् ।
साधोः सकाशादादाय विश्वकर्म्मा गिरिं ययौ ॥
निर्म्माणकर्म्मकुशलः खलु विश्वकर्म्मा ·
तन्निर्ममे झटिति वासगृहं सुरम्यम् ।

दूरीकृतारिभयमुच्छ्रितमायतञ्च
रेजे सुरञ्जितमिदं सुखशान्तिदाढ्यं ॥

तस्मान्महाद्वौ भित्तयो मध्यभूमिस्तद्वत्सर्वं निर्म्मितं कान्तलौहैः ।
द्वारं रम्यं कुञ्चिकाधारयुक्तं सम्यग्रत्नैर्भूषितं चित्रितञ्च ॥
निर्म्माय दुर्ग्गोचितकर्म्मयुक्तं स कर्म्मशूरो सदनं प्रयत्नात् ।
सन्तोष्य चन्द्रं बहुमूल्यरत्नैः पुरस्कृतश्चाथ गृहं प्रतस्थे ॥
हृद्विश्वकर्म्मप्रकृतं निकेतं ज्ञातं समाप्तं मनसा विदित्वा ।
तं तूर्णमासाद्य पथि प्रयान्तं रोषेण देवी सहसेत्युवाच ॥
यस्यानुरोधाद्भवता सयत्नं विनिर्म्मितं लौहमयं निकायम् ।
स मे विपक्षश्चिरमेष साधुर्ज्ञात्वाप्यशङ्कोऽसि कुलात् कृतघ्न ॥
तथाऽधुना मे कुरु तत्र गत्वा तद्भित्तिपार्श्वे भुजगैकवर्त्म ।
ततोस्तु ते क्षेमकरश्च सर्वं नोचेद्विपन्नो भवितासि शीघ्रं ॥
तां विश्वकर्म्मा सभयं शशंस क्षमस्व मे देव्यभयं प्रयच्छ ।
लब्ध्वा प्रसादं चलितोऽस्मि गेहं कथं पुनर्यामि ब्रवीमि किन्तं ॥
देवी तमूचे शृणु विश्वकर्म्मन् पृच्छेत् स चेत्त्वां कथमागतोसि ।
ब्रवीष्व चन्द्रं कियदस्ति शेषं स्मृत्वा तु तत् कर्त्तुमिहागतोऽस्मि ॥
ततोऽनुरोधेन भयेन चास्याः कर्त्तुं भुजङ्गागमनाय रन्ध्रम् ।
आययौ लौहकटाहं तदानीं स विश्वकर्म्माभयशङ्किताल्मा ॥
पाषाणाज्ज्ञातमीशानकोणे सूक्ष्मच्छिद्रं सूत्रसञ्चारयोग्यं ।
कृत्वा तत्राङ्गारचूर्णैश्च पूर्णं तूर्णं तस्माद्विश्वकर्म्मा प्रतस्थे ॥

अथाऽऽज्ञातच्छिद्रवार्त्ताकः साधुः शुभे काले सुतस्य विवाहदान-
मतमिति विचिन्त्य लौहकटाहं विश्वकर्म्मणा दृढनिर्म्मितमित्यभिजानन्न-
भयः पुरोहितेन सह मन्त्रयित्वा चादौ निमन्त्रणकुशलान्
—नानादिग्भ्यः भो ब्राह्मणा मत्सुतस्य शुभविवाहे कुटुम्बवर्गा-

निमन्त्रयितुं यथादेशं गन्तुमर्हन्ति भवन्तः। ततस्तत्प्रहिता विप्राः परमौत्सुक्येन सगवाक्षहस्ता वणिजामावासभूमीः प्रतस्थिरे। अथ गवाक्षदानेन प्रत्येकमभिनिमन्त्र्य प्रत्यागतांस्तानसौ पुरस्कारेण तोषयामास सर्व्वान्।

अथ सादरं निमन्त्रिता वणिजां गणाः सगणा महानुरागेण स्वस्वजायासुतकन्यकाभिः सह वर्त्तमाना यथायोग्यकाले चम्पकनगरमुपतस्थुः सर्वे। तत्र ते बहूनि दिनान्यधितिष्ठन्तिस्म यतो गन्धवणिज कुटुम्ववर्गाः निमन्त्रिताः सन्तः सुहृदां निवासभुवमागत्य प्रथममेव शाकस्य वीजानि वपन्ति भूमौ; यावत्तदङ्कुरितं शाकं न भक्षयन्ति तावत्ते कर्म्मणि सम्पन्नेऽपि कुटुम्बगृहमधिवसन्तीति रीतिः॥

ततोऽसौ चन्द्रदासः शुभकर्म्मनिर्व्वाहार्थं बन्धुवर्गान् प्रति विभक्तकर्म्मभारमर्पितवान् स्वयं पुनस्तेषां तत्त्वावधारकोऽभिमत आसीत्। अथ साधुर्मालाकारवधूमानाय्य तामादिदेश, अयि मालिनि मत्पुत्रस्य शुभविवाहोपयुक्तमेकं मुकुटं रचय। तदुच्यते।

मुक्ताहीरहिरण्यरौप्यमणिभिर्युक्तं सुपुष्पाश्रितं
कर्त्तव्यं मुकुटं त्वया समुचितं तत्रेति लेख्यं पुनः।
गोविन्दो गरुड़े मरालसहितो धाता महेशो वृषे
श्वेतैरावतवाहनोऽमरपतिर्देवः समीरो मृगे॥
यमः कुवेरो वरुणश्च वह्निरन्येपि दिक्पालगणाः सवाहाः।
लेख्यास्तथाकाशविहारिणोऽन्ये गन्धर्व्वविद्याधरकिन्नराद्याः
आदिष्टे मुकुटे तया विरचितं सर्वं सुदृश्यं शुभं
देवाश्चालिखिताः सवाहनयुताः सर्पस्तु नैवार्पितः।
आशङ्कयति वणिक् विलोक्य भुजगं क्रोधेन तप्येत चेत्
तेनास्यैव सुखं विनश्यति ततो हर्षे विषादो भवेत्॥

तच्छ्रुत्वा मनसा कृतागसमिमामित्यब्रवीत् सा रुषा
रे रे मालिनि चित्रितं त्रिभुवनं सर्पः कथं नार्पितः ।
पुत्रास्ते न गताः कृतान्तकवलं गर्वस्ततो लक्ष्यते
शीघ्रं मे फणिनां फणाः प्रतिफलं दास्यन्ति तेऽतःपरं ॥
मालाकारवधूरुवाच सभयं त्वं गच्छ मातर्गृहं
लेख्यस्ते भुजगः सुगोपनतया तच्चित्रपार्श्वे मया ।
देवी तद्वचसा गता निजपुरं सर्पाङ्कितं मालिनी
कृत्वा पूर्णमिदं विचित्रमुकुटं साधोः समीपे ददौ ॥
सुचित्रितं तन्मुकुटं विलोक्य सन्तुष्टचित्तेन वणिग्वरेण ।
पुरस्कृता वस्त्रधनादिदानैः सा मालिनी स्मेरमुखी प्रतस्थे ॥
अतःपरं तस्य गेहे ये कुटुम्बाः समागताः ।
तेषां नामानि वक्ष्यन्ते श्रेष्ठानामिह साम्प्रतम् ॥
माधुदत्तो वणिक् श्रेष्ठो वर्द्धमानादुपागतः ।
लक्षपतेस्तु जामाताऽऽगतो धनपतिर्वणिक् ॥
हरेकृष्णो वणिङ्नाथः कुमारीनाथदत्तकः ।
रामरामो जगन्नाथः कालिदासो महाधनः ॥
वणिग् जनार्द्दनो दासः श्रीहरिश्च सनातनः ।
दुर्गादासो जगच्चन्द्रोऽनन्तदत्तोऽतिदाम्भिकः ॥
लक्षपतेः सुतश्चापि दत्तो नीलाम्बरो वणिक् ।
श्वशुरश्चन्द्रदासस्य शङ्खदत्तो धनेश्वरः ॥
वणिजां षोड़शानाञ्च कुलेषु कुलभूषणाः ।
सङ्के समागतास्तस्य वणिग्वंशाश्चतुर्दश ॥
सप्तग्रामादयो देशा वणिजां वासभूमयः ।
तत्तद्देशागताः सर्व्वे सत्समाजा निमन्त्रिताः ॥

माता नखिन्दरस्याथ शुभोपयमवासरे।
हरिद्रालेपनादीनि शुभकर्म्माण्यकारयत्॥
ततो नखिन्दरः स्नातो जातो हेमसमद्युतिः।
दुकूलं परिधत्तेस्म स्वर्णसूत्रेण मण्डितम्॥
अथास्य वरपात्रस्य क्षतद्वारैः सबान्धवैः।
तत्कर्म्मकुशलैः सर्व्वैर्बणिग्भिः समुपागतैः॥
सम्पादितं यथायोग्यं सज्जनं सर्व्वसम्मतं।
नव्यैश्च नव्यभावेन भव्यैर्भव्यतया पुनः॥
साक्षाच्छिव इवोद्दीप्तः श्वेतचन्दनचर्च्चितः।
दधानस्तिलकं भाले शोभनोऽभून्नखिन्दरः॥
तत्कण्ठे मल्लिकामाला स्वर्णहारेण सङ्गता।
तड़िता सहितारब्धा चन्द्रलेखेव दिद्युते॥
भुजे विरेजे मणिनाविभासितं केयूरयुग्मम् वलयं प्रकोष्ठके।
कर्णे च मुक्ताफलमालि कुण्डलं शिरस्तदीयं मुकुटेन भूषितम्॥
एवंविधाभिर्भूषाभिः सज्जितोऽयं नखिन्दरः।
निम्बविन्यस्तपर्य्यङ्कां वक्रवंशेन शोभिताम्॥
पट्टाम्बराच्छतच्छादां मुक्तामालाविराजिताम्।
पट्टदोलां समारुह्य निर्ययौ सायकेतनम्॥
इदानीं मनसा देवी किं पुनर्घटयेत् फलं।
इति चिन्तानिमग्नास्ते जातास्तत्र सवेदिनः॥

इति श्रीभगवच्चन्द्रप्रणीते बेहुलानखिन्दरे नखिन्दर-
विवाहोद्योगवर्णने द्वितीयसमुल्लासः।

# वेहुलानखिन्दरम् ।

## तृतीयसङ्कल्पना ।

अथ चन्द्रदासो वणिक् शुभाभ्युदयिकक्रियासम्पादनानन्तरं चर्व्यचोष्यलेह्यपेयादिभोजनविशेषैः परितृप्तानां वरयात्रिकाणां कुटुम्बानां वाद्यकारादिसहयात्रिकाणाञ्च सर्व्वेषां गणैः परिवृतः सन् सकौतुकं समाश्रितसन्दर्भं सायस्यावासं निशान्तं प्रति वरयात्रायानमग्रेसरं कृत्वा प्रयाणं प्रचक्रमे ।

वाद्यानां तुमुलध्वनिः समुदितः साधोर्निवासे ततो
लोकव्यूहमयञ्च चम्पकपुरं जातं वणिङ्मण्डलैः ।
अन्ये ये च निमन्त्रिता बुधगणा ये चोर्द्ध्वपुण्ड्रा द्विजाः
सर्वे तत्र पुरोहितप्रभृतयः सोल्लासमभ्यागताः ॥
वीथीपरिसरे तत्र गच्छतां गजवाजिनाम् ।
पादप्रचारणोद्भूतरजोराजीभिरावृतम् ॥
गगणं धूमसङ्घातैराकीर्णमिव लक्षितम् ।
जनानां वाद्यघोषेणाकृष्टानां पुरवासिनाम् ॥
युवतीनाञ्च दृष्टानां तद्वीथीपार्श्ववर्त्तिनाम् ।
हर्षोत्फुल्लमुखं तेषां जातं राजीवसन्निभम् ॥
वरयात्रिगणाश्चाथ पश्चादग्रव्यवस्थिताः ।
केचित् पार्श्वचरास्तेषां केचिच्च मध्यवर्त्तिनः ॥

भूमीपरिसरे तत्र चतुरस्रे तदङ्गने ।
पट्टशय्यासमाच्छन्ने सदः प्रसं सुसज्जितम् ॥
विशेषाच्छोभितं तच्च धवलाम्बरचीवरैर्धृतम् ।
तेन ज्योत्स्नामयं जातं किंपुनर्दीपभासितैः ॥
ऊर्ध्वं चन्द्रातपव्याप्तं तदधो रज्जुदोलितैः ।
ज्वालितैर्दीपसङ्घातैर्गृहमासीद्दिवोज्ज्वलम् ॥
तत्रासीन्मध्यदिग्भागे तद्विस्तृतसुखासनम् ।
कार्पासकोमलं चित्रविचित्रास्तरभासुरम् ॥
तूलस्थूलोपधानेन विधानेनोपशोभितम् ।
क्षुद्रैः पार्श्वोपधानैश्च सुखसेव्यं मनोरमम् ॥
सम्मुखे निहितौ दीपौ द्वौ च काचघटावृतौ ।
मधूच्छिष्टसमायोगाद्दाप्तौ तौ सूर्यसन्निभौ ॥
ततः सुखासने तस्मिन् वरपात्रो मणिचन्द्रः ।
सुरराज इवारेजे रूपभूषणशोभया ॥
पार्श्वे पारिषदास्तस्योपविष्टा वरयात्रिणः ।
सर्वे चकाशिरे तत्र निर्जरा इव भास्वराः ॥
गायन्तो गायका गीतं तदानीं मधुरस्वरम् ।
मनसो मोदनं तत्र चक्रुस्ते किन्नरा इव ॥
कन्यायात्रिगणास्तस्य पुरो वामेऽथ दक्षिणे ।
स्वेच्छयोपाविशन्त शिशवः प्रतिभान्विताः ॥
ततः प्रष्टुं प्रवृत्तास्ते वरस्य वरयात्रिणः ।
किन्तावत् पठितं शास्त्रं युष्माभिः स्थूलदर्शिभिः ॥
किञ्च न श्रूयते किञ्चिन्मूकवत् स्थीयते कथम् ।
का भीतिर्विद्यतेऽस्माकं यथाज्ञानं निगद्यताम् ॥

वरयात्रिगणैरस्माकं मानुषेभ्यो भयं कुतः ।
अस्माभिर्लक्ष्यते तावद्यूयं किं मानुषा न वा ॥
अतो हि स्थीयते तूष्णीं यावद्यूयं न निश्चिताः ।
इत्युक्त्वा ते हसन्ति स्म युगपद्वरयात्रिणः ॥
एवं हासोपहासेनालपताञ्च परस्परम् ।
उच्चैर्हासोऽभवद्येषां जयस्तेषामभूत्ततः ॥
अन्यत्र तत् सभायान्तु दिव्यासनमधिष्ठिताः ।
ब्राह्मणाः पण्डितश्रेष्ठाः शास्त्रवादपरायणाः ॥
अदृश्यन्त तदा सर्व्वे तेजसा तापसा इव ।
किन्तावद्भो विवाहत्वं यदि जानीथ कथ्यतां ॥
वादमुत्थापयामासुरित्युक्त्वा ते परस्परम् ।
पुस्फुरुस्तन्मुखे वाचो लाजा इव विभावसौ ॥
वितण्डावादिनान्तेषां पूर्णं कोलाहलैः सदः ।
तत्र प्रदीप्तरोषाणां वाचालानां जयोऽभवत् ॥

सभास्य पार्श्वे गृहदेहलीषु समाश्रितानां प्रतिवेशिनीनाम् ।
पुरस्तथा गेहगवाक्षपार्श्वे दण्डायितानाञ्च वणिग्वधूनाम् ॥
विद्याधरीणामिव सुन्दरीणां दिव्याङ्गनानामिव भूषितानां ।
वरस्य रूपं वरयात्रिणाञ्च सभां समालोकितुमुत्सुकानाम् ॥
नासाग्रदोलायितमौक्तिकानि मुखानि पूर्णेन्दुनिभानि तासां ।
विलोक्य संहर्षपरीतचित्ताः सर्व्वे बभूवुर्वरयात्रिणस्ते ॥
तदन्तःपुरवर्त्तमानाः विचित्रवस्त्रा वणिजां रमण्यः ।
विवाहकालोचितकर्म्मदक्षा आचारकार्य्येऽभिरता बभूवुः ॥

तदाभूद्भूषिता ताभिर्वञ्जुला चारुभूषया ।
कृतं गात्रं हरिद्राक्तं चूर्णोद्वर्त्तनमार्जितम् ॥

सुवासितेन तैलेन मूर्द्धजा स्नपितास्ततः।
सौवर्णकङ्कतेनापि यथास्वच्छं प्रसाधिताः॥
ततस्तु वेशविन्यासात्कवरीपरिबन्धनात्।
पूर्णकुन्तलतश्चास्याः शुशुभे भास्वरं मुखम्॥
पुनर्दोलायितं कर्णे तस्याः काञ्चनकुण्डलम्।
बभासे नीरदश्यामकेशपार्श्वे शुभांशुवत्॥
मुक्ताफलञ्च नासाग्रे शिरो मणिविराजितं।
अलोभयत तत्सर्व्वं दर्शकानां विलोचनं॥
वेङ्कला सुन्दरी सुभ्रूः सर्व्वाभरणभूषिता।
इन्द्राणीव तदा रेजे मृगशावकलोचना॥
पूर्णिमाचन्द्रवत्तस्या वदनं यत् सुधाधरम्।
दिवानिशं प्रसन्नं तत् कं न काममनोहयत्॥

अथ पुरोहितेन धीमता लग्नकालमुपस्थितं विज्ञाय निवेदि सायो वणिक् कन्यादाने समुत्सुकः सम्प्रदानगृहे वरपात्रमुपस्थापयि पुरोधसा ब्राह्मणानामनुमतिं स्वयञ्च मान्यतमानामन्येषामाशां गृही वान्। ततो गन्धवणिजां प्रधानः प्रामाणिकाभिधः कोऽपि समागत्य नाति पुत्रेण वरपात्रं समानीय सम्प्रदानगृहे आसने प्राङ्मुखं न्यवेशय दाता पुनरुदङ्मुखो निवेशितः, तत् स्थानं च दानद्रव्यैरपूरयत्। तदुच अपूर्व्वंचतुष्कीसहितं शय्यावृतं ससोपानं स्वर्णपदिकं पर्य्यङ्कमुभः स्वर्णरौप्य-व्यावहारिक-पानभोजनादिकपात्राणि कांस्यपित्तलनिर्म्मि न्यपराणि च विविधतैजसपात्राणि तन्मध्यस्थलविन्यस्तसुखासनं पि हिरण्मयपात्रपरीतरत्नराजितवराभरणानि च सर्व्वाणि यथास यथाविधानञ्चासौ भव्यतयान्यवीविशत्। ततोऽसौ पुरोहितः प्र शुभविवाह-स्वस्तिवाचनं वस्त्राभरणदानेन वरणञ्च कारयित्वा वर

गीयामाचारपीठकं प्रास्थापयत् । तत्राचारासने समुपस्थिते वरे शङ्ख-
रत्नपात्रादि हस्ते कृत्वा नवनारीपरिवृता श्वश्रूरमणा जामातरं मनो-
भिमतमभिसमीक्ष्य कौतुकं वरीतुं पयोदकहस्ता समागमत्, कन्युवाधा-
यितुं वाद्यमावादयितुमादिदेश । तदानीमवसरक्रमेण युवतयः सहास्य-
दना व्यवहारप्राप्तं तासामामोदनलक्ष्यं वरयाचकस्य कर्णमर्दनं बद्
मुष्ट्यभिघातात् प्रमोदनम् प्रचक्रुः ।

ततः श्वश्रू हर्षपरीतचित्ता प्रथमतः पर्णेन ततो धान्यादिपूर्णापूपेन
ततो मङ्गलश्रियाः पात्रेण ततो दीपपात्रेण च क्रमशस्तं वरं वरणी-
तिस्म । अनन्तरं तत्रैव वेङ्कला समानीता बभूव ।

यासौ तदानीं विपरीतपीठमध्यासिता रत्नविभूषिताङ्गी ।
द्राम्बराच्छादितसर्वगात्रा शिरोग्रभागे मुकुटं दधाना ॥
आचारभूमौ कृतदारमव्यैर्नीता तु सा स्वामिसमीपदेशं ।
प्रदक्षिणीकृत्यसमापनान्ते मिथः शुभालोकनमप्यकारि ॥
वरश्च कन्यावरणे समाप्ते नीतः पुनर्दानविचित्रपीठे ।
पूर्वास्य आसीद्वर उत्तरास्यो दाता च कन्या वरसम्मुखीना ॥
पुरोधसोक्तान्युभवंशकानां गोत्राणि नामप्रवराणि चोक्त्वा ।
पाद्यार्घ्यदर्भादिभिरर्चिताय वराय कन्यां प्रददे प्रदाता ॥
नन्तथाचारविधिक्रमेण तौ दम्पती वासरसद्म नीतौ ।
चक्रतुर्मङ्गलभाण्डलीलां नारीभिरामोदमुपेयिवांसौ ॥

कन्यायाः सहचारिण्यो वरेण सहितास्ततः ।
एकस्यामेव शय्यायां समासीनाः समन्ततः ॥
रहस्यालापनार्थाय निशाशेषमयापयन् ।
वरकन्याधिवासात्तद् गृहं वासरमुच्यते ॥

नान्तरे सायवह्निःप्रकोष्ठे सर्वेपि कन्यावरयालिताच ।

आहारवस्तूनि चतुर्विधानि दत्तानि भुक्त्वा परितोषमापुः॥
तृप्तिं गता देशनिवासिवर्गाः प्रतस्थिरे स्वस्वनिकेतनेषु।
कुटुम्बकाः सायगृहे निषेदुः पिधानयुक्ते शयने शयानाः॥
नखिन्दरो वेहुलया करग्रहे चिरेण प्राप्तप्रणयोत्सुकोऽभवत्
विज्ञाय देवी मनसा तदाशयं चिक्षेप सम्मोहशरं ततः परं।
तस्य प्रभावेण विचेष्टविग्रहं पतिं तमालोक्य रुरोद वेहुला।
निशम्य तत्प्रोचुरिदञ्च यातिरणः कथं व्रजामो भवनं निराश्रय
अथास्य गेहे रमणीजनानां विलापकोलाहल आविरासीत्
ततः कुमारी रुदती तदानीं तुष्टाव सम्यग्विनयेन देवीं॥
क्षमस्व मां देवि कुरुष्व रक्षां कृतागसि त्वं करुणां विधेहि
दासी विपन्ना पतितास्मि पादे हरस्व कन्ये हर कल्मषं मे॥
स्तवेन तुष्टा करुणार्द्रचित्ता देवी स्वयं तं हरतिस्म बाणं।
क्षणेन सुप्तोत्थइवाप्तचेता नखिन्दरो विस्मृतवेदनोऽभूत्॥
सजीवनं सर्वजना नखिन्दरं विलोक्य हर्षान्वितचित्तवृत्तयः
सक्षीरमिष्टान्नमभोजयत्तदा वुभुक्षितं वेहुलया सहासितं॥
चन्द्रः श्रुत्वा दैवजं दुर्विपाकं प्राप्तः प्रायो यत्परं नास्ति दुःखं
ऊचे सायं त्वं प्रधानः सुहृन्मे कन्यां पात्रं प्रेषयस्वातिशीघ्रम्
सायत्समूचे भवने मदीये विश्रम्य साधो रजनीं त्वयाद्य।
गन्तव्यमुल्लासवता प्रभाते पाणिग्रहे रीतिरियं प्रसिद्धा॥
उक्तोप्येवं साधुरेनं वभाषे पुत्राः षण् मे खादिताः सर्पमाला
चित्ते नित्यं साध्वसं विद्यते मे जाने नैतत् किं विधाता विधा
ततो विषण्णस्तमुवाच सायः प्रकम्पते मे हृदयं त्वदुक्त्या।
देव्या विवादं न कदापि जानन् सुताय ते सम्प्रददे सुतां मे
माभूद् भयं ते भव साय सुस्थो गृहं दृढं लौहमयं ममास्ते

…स्थापयस्वेति वरञ्च कन्यामाहस्म चन्द्रो न सहे विलम्बम् ॥
…वाहरात्रौ वरकन्यकानां सम्प्रेषणा दुःखकरी नितान्तम् ।
…थापि सायः स यथाविधानं प्रस्थापयामास वरं सकन्यम् ॥
…न्याप्रयाणे गलदस्रुधारा सायस्य पत्नी रुदतीदमूचे ।
…ां प्रेष्य वत्से गतजीवनेव न स्थातुमिच्छामि गृहे क्षणार्द्धं ॥
षट् सोदरान् यासि विहाय कुत्र स्नेहेन,येषां सुखिनी सदासीः ।
…खं न जानासि कदाचिदेव प्रिया त्वमेकेव गृहस्यलक्ष्मीः ॥
…से कथं पास्यसि भोक्ष्यसे वा तच्चिन्तया मे हृदयं न सुस्थम् ।
न सन्निकृष्टे मिलितो वरस्ते देशे सुदूरे पतितासि तस्मात् ॥
मयाद्दि पतुर्निलये त्वमद्य नेष्यामि वत्से न चिरेण गेहम् ।
…जन्तु सार्द्धं परिचारिकास्ते छायेव तास्त्वाऽनुचरन्तु कार्य्ये ॥
…ं धीमती मे तनया सुशीला जानासि सर्वं सुधियां सुवृत्तं ।
सङ्क्षेपतस्तच्छृणु मे तथापि कुर्य्या गुरूणां प्रसमीक्ष्य कार्य्यम् ॥
क्रीड़ासखीभिः समकालमेत्य तां वेष्टयित्वा रुदतीभिरूचे ।
प्रेमास्मदीयं क्व नु यासि हित्वा विलोकयामस्तु कदाऽऽननं ते ॥
…ा विहीना हि वयं सुदीना न जीवनं धारयितुं समर्थाः ।
सा साश्रुनेत्रा मधुरैर्वचोभिः प्रवोधयामास समा वयस्याः ॥
…ः समेता परिचारिकाभिर्नमस्यवर्गं सहसा प्रणम्य ।
… वेङ्कला स्वामिसुरम्ययानमारोहयिष्ट स्वजनैर्यथावत् ॥
…लायाने वेङ्कला रोहिणीव पार्श्वे लग्नाशीतरश्मेस्तदानीं ।
…े शोभां स्वामिनः सङ्गमेत्य पत्युर्गेहे गन्तुकामा सकामा ॥
…लायानं तौ तदारुह्य यातौ शीघ्रं रम्यं चम्पकं चन्द्रवासं ।
…ाः सर्व्वे गायका वादकाश्च स्वं स्वं यन्त्रं वादयन्तोऽभिरामम् ॥
…ापातौ यातिवर्गश्च साधुः सर्व्वे चम्पाग्रामवीथीं प्रतीयुः ।

श्रुत्वा घोषं द्रष्टुकामा रमण्यो वीथीपार्श्वे धावमाना बभूवुः।
तस्यां रजन्यां भयविह्वलात्मा चन्द्रस्तदानीं भ्रशमादरेण।
सखीसमेतां च वधूं सपुत्रं लौहालयं स त्वरितं निनाय॥
साधुस्ततो लौहमये निकेतने निवेश्य हृष्टो वरकन्यकादिकं।
निःशङ्कचित्तोऽस्य कवाटबन्धनं कृत्वा प्रतस्थे स्वगणैर्निजालयं

तत्रासन् नकुलादयः प्रहरिणो वीर्य्यप्रतापान्विता
द्वारे जागरितः स्वयं विषभिषङ् मन्त्रौषधज्ञो निशि।
दीपाः प्रज्वलिता बभू रविनिभाः शय्या तथा शोभना
तस्यामेव सखीजनैः परिवृतावास्तां तदा दम्पती॥

तां सर्वरीं यापयितुं सुखेन सा देवने नाथमतं ययाचे।
ज्ञात्वा मतं तस्य मुदा सखीभिः शारिं ततः पातयितुं प्रवृत्ता
सुचित्रितैः शारिफलैश्च शारिभिस्तथा विचित्रैर्गजदन्तपाशकै
ततःपरं देवयितुं नखिन्दरः सखीगणैर्वङ्कलया समाहृत॥

नर्म्मणासौ विनोदार्थमित्यूचे तत्सखीजनान्।
दीव्यता शक्यते कर्त्तुं मया यत्तन्निशम्यताम्॥
एते वः पाशकाश्चित्रं कारसृष्टा ममाज्ञया।
यथासंख्यं पतिष्यन्ति देवने कौशलेन मे॥

पततु मे नवसङ्ख्यकपाशको भवतु शारिकलापजयस्तदा।
विशतु शारिगणाः पटमञ्चके भवति चेदिति मे विजयो भवे

श्रुत्वा तत्सहचारिणीभिरुदितं श्रेयो जयस्ते तदा
च्छिप्स्यसे यदि पाशकाश्चतुर नः सख्या चतुःसङ्ख्यव
श्रुत्वा सर्व्वमिदं सहास्यवदना सा सायकन्या तत-
स्तूर्णं दैववशेन पातितवती तत्तन्मिताम् पाशकान्॥

कृते तया तन्निचिते तु शारौ तस्याः सखीभिश्चतुराभिरेव

स्त्वैर्हसन्तीभिरभाषि तूर्णं जयोऽधुना धूर्त्त तवापि सिद्धः ॥
हते म्लानमुखं पतिं तदा निरीक्ष्य रामा हसिताननाऽभवत् ।
तो हसद्भिः परिचारिकागणैर्जितं जितं तावदिति प्रभाषितं ॥

गीतास्तया कुशलिनो निजशारिवर्गाः
सारीफले परमचिन्तितपट्टवासे ।
तस्यास्ततः प्रियसखीभिरभाषि सोऽयं
द्यूते विलक्षणकृती कितवासि जातः ॥

सन्नुवाचाथ नखिन्दरस्ता युष्माकमेषा चतुरा वयस्या ।
दृष्ट्वा यतो मामसहायवन्तं स्वापाकुलं सङ्कुचिताक्षियुग्मं ॥
नूनं जयोत्साहवती सतीयं सखीसहाया छलतो जिगाय ।
हायहीनस्य यतो जिगीषोः साध्येपि कार्य्ये वितथः प्रयासः ॥

अतोऽहमस्मि युष्माभिरुपहास्यः पराजितः ।
यत्र नास्ति गुणज्ञो हि गुणास्तत्र विलुप्यते ॥

आस्यतामद्य निशावशेषो विश्राप्यतां वः प्रियहृद्वयस्या ।
विना विघातं यदि जीवितः स्यां ज्ञास्ये तदा श्वो भवदीयसख्या ॥
ततः सखीरित्यभिधाय सद्यो नखिन्दरः स्वापसमाकुलोऽभूत् ।
सख्यश्च निद्रावशगा बभूवुः सा वेङ्कला तत्र विनिद्रमेता ॥
त्येति तथात्र मनसाप्यचिन्तयत् स्वकार्य्यसिद्ध्यै समयोऽयमागतः
प्रोद्यता घातयितुं नखिन्दरं समाह्वयत्सा सहसा भुजङ्गमान् ॥

आहूताः फणिनां गणाः सचकिताः पातालभूवासिनो
देव्याः सन्निधिमागताः स्वयममी रूपेण कालोपमाः ।
सर्व्वे कालफणाः करालदशनाः स्थूलाश्च रक्ताधरा
नानावर्णभयङ्करा विषधरीहर्षप्रदाः किङ्कराः ॥
तत्र ते भुजगाः सर्व्वे त्रयो लक्षाः समागताः ।

तानूचे मनसा वाचं यूयं ये मामुपस्थिताः ॥
सान्तालिपर्व्वते तूर्णं यात लौहमयं गृहं ।
दुर्द्दान्ता रक्षकास्तत्र प्रजाग्रति समाहिताः ॥
गत्वा केनापि मार्गेण द्रुतं शक्नोति यः फणी ।
दंष्टुं चन्द्रसुतं सुप्तं स मे सर्व्वप्रियो भवेत् ॥
संश्रुत्य देवीवचनं भुजङ्गा मौना बभूवुर्नतमस्तकास्ते ।
एकोऽहिरेषामिह वङ्कराज उवाच तां प्रेषय साम्प्रतं मे ॥
तद्वाक्यहृष्टा मनसा तमूचे गच्छ द्रुतं मे कुरु कार्य्यसिद्धिं ।
ततः स वङ्कस्त्वरितं जगाम सकौशलं तत्र विवेश शीघ्रं ॥
तां वेङ्कलां जागरितां विलोक्य स शङ्कितः पार्श्वगतो बभूव ।
गृहान्तरस्थं प्रसमीक्ष्य नागं ससम्भ्रमं साऽदरतस्तमूचे ॥
अविरतं दिवसान् गणयाम्यहं नहि लभे भवतः शुभदर्शनं ।
भुजग भाग्यवशात् त्वमिहागतः पिब पयो मम काञ्चनभाजने
वचनकौशलतो निरवीक्षतो विषधरस्त्रपया नतमस्तकः ।
प्रतिविधानविवेचनया तया कनकयन्त्रनिबद्धगलः कृतः ॥
ज्ञात्वा देवी वङ्कराजं निबद्धं सख्या सार्द्धं मन्त्रयित्वा तदानीं
तस्यां रात्रौ कालदन्तं भुजङ्गं तत्राहूय प्रेरयामास सद्यः ॥
तमपि सा तरसा निजया धिया धृतवती पयसा प्रतिलोभितं
तदवधि प्रमदा सुसमाहिता स्थितवती मनसाभयकातरा ॥
तस्मिन् यन्त्रे कालदन्ते भुजङ्गे बन्धं याते चिन्तयामास देवी
द्वावेतौ मे नागवर्य्यौ निबद्धौ किं कर्त्तव्यं कोऽधुना प्रेरणीयः
पुनः सोदयकालाख्यं भुजगं प्रैरयत्तदा ।
बबन्ध वेङ्कला नागं क्षणात्तमपि पूर्ववत् ॥
तया भुजङ्गाः क्रमशो निबद्धाः सन्दंशयन्त्रेण पृथक् त्रयस्ते ।

खिन्दरो जागरितस्ततोऽन्तभूदा तमेषा भणितुं प्रवृत्ता ॥
ोन ते जीवनमद्य नाथ संरक्षितं कालभुजङ्गतुण्डात् ।
जङ्गमा लौहगृहे प्रविष्टास्त्वां हन्तुकामा मनसोपदिष्टाः ॥
ा स्वयस्ते च मया निबद्धाः क्षीरप्रदानेन विनीतवाचा ।
तःपरं वा मनसा किमन्यद् दुःखं न जाने घटयिष्यते सा ॥

इत्युक्तेन लखिन्दरेण कथितं तच्चिन्तनं त्यज्यताम्
प्राणान् मे जठरानलो वितपते भक्तेन रक्ष प्रिये ।
अस्मिन् दुर्गमलौहवेश्मनि मया भक्तं कुतो लभ्यते
त्वं यद्येकमपेक्षसे क्षणमिदं पक्तुं तदा शक्यते ॥
भाण्डं माङ्गलिकं सतण्डुलमथ स्थालीं प्रकल्प्य स्वयम्
नारीकेलफलत्रयेण विहितां चुल्लीञ्च तद्धारिणा ।
तच्चेलाञ्चलखण्डमिन्धनसमं प्रज्वाल्य दीपाग्निना
शीघ्रं वेहुलया विचक्षणतया पक्वं तदन्नं तया ॥
अथ सा मनसा देवी तज् ज्ञात्वा कुपिता सती ।
नेतया मन्त्रयामास किं विधेयमतःपरम् ॥

ाव्रशेषेऽपि न तं भुजङ्गः शक्नोति दंष्टुं यदि कश्चिदद्य ।
ामि मर्त्त्ये हि हतप्रभावा देवीषु गण्या न कदा भवेयम् ॥
ु कालीं मनसा भुजङ्गीमाहूय सा तां निजगाद देवी ।
ालि कल्याणि मम प्रियासि यत्नेन सम्पादय मत्प्रियं यत् ॥
ोसि चेत्तद्भवनं प्रविश्य त्वं सत्वरं चन्द्रसुतं निहन्तुम् ।
मदीयं द्रविणं स्वरूपं दास्यामि तुभ्यं हि यथाभिलाषम् ॥
ो भुजङ्गी मनसानिदेशात् प्रसन्नभावेन निशावसाने ।
शैलाभिमुखं ततोऽसौ लखिन्दरो यत्र बभूव सुप्तः ॥

इतः सा बेहुलोवाच पक्वान्नं स्वामिनं वचः।
इदन्तु प्रस्तुतं भक्तं भुङ्क्ष्व जीवितनाथ मे॥
इत्युक्त्वा निद्रया रामा क्रमशोऽवशतां गता।
जाता देव्याः प्रभावेण तदा सर्व्वेऽप्यचेतनाः॥
द्वारपालाश्च ये केचित्तत्रस्था नकुलादयः।
कालनिद्रावशीभूताः सर्व्वे तन्माययाऽभवन्॥

ततस्तु काली गृहकोणरन्ध्रमङ्गारचूर्णेन दृतं विलोक्य।
निश्वासवातेन विमुक्तमेतत् ज्ञात्वा तदभ्यन्तरमाविवेश॥

प्रविश्याभ्यन्तरं तस्य तयो रूपं मनोहरं।
दृष्ट्वा मुग्धा सती काली मनसेदमतर्कयत्॥
अपूर्व्वमेतयो रूपं दृश्यते वरकन्ययोः।
किमस्मिन् भवने जातश्चन्द्रविद्युत्समागमः॥
सम्मोहनं कान्तकायं सर्व्वेषां लोचनप्रियम्।
लखिन्दरं विना दोषं दंष्टुं नोत्सहते मनः॥
किं करोमि क्व गच्छामि दंशामि कथमीदृशं।
पालयामि कथं देव्याः सन्देशं खिन्नचेतसा॥
इत्येवं बहुधाऽऽलोच्य काली कालस्वरूपिणी।
तस्य पादतलं गत्वा भुजङ्गी शयिताऽभवत्॥
लखिन्दरेण निद्रायां यदा पार्श्वे विवर्त्तिते।
पदाघातहता सेयं दुःखितोवाच सर्पिणी॥
चन्द्रसूर्य्यादयो देवा भवन्तु मम साक्षिणः।
देव्यादिष्टाऽहमायाता विना दोषं पदाऽऽहता॥
अतो लखिन्दरं दष्ट्वा न भवाम्यपराधिनी।
इत्युक्त्वा चरणं तस्य सहसा दंशितं तया॥

विषज्वालाऽभितप्तोऽसौ जागरित्वाऽभ्यभाषत ।
विषमं केन दष्टोऽस्मि ज्ञातोऽहं विकलेन्द्रियः ॥
उत्तिष्ठ वेङ्गले शीघ्रमधीरं जीवयस्व मां ।
प्रिये प्राणैर्विमुच्येऽहं वदन्नासीदचेतनः ॥
स्वामिनाहूयमानासौ तत्क्षणात् प्रतिबोधिता ।
ऐक्षिष्ट तरसा कालीं पलायनपरां भयात् ॥
तयाऽथ कर्त्तरीघातच्छिन्नं सार्द्धद्वयाङ्गुलम् ।
करेणादाय तत् पुच्छं बद्धं वस्त्राञ्चले द्रुतम् ॥
वेदनाकातरा काली देवीं वेदयितुं ययौ ।
वेङ्गला मुहुराहूय नाथं मेने न चेतनं ॥

ात्वा ततो निश्चलनीरवं पतिं रुरोद बाला तदनिष्टशङ्कया ।
ख्यस्तदा जागरिताः सविस्मया विज्ञाय सर्व्वं रुरुदुस्ततःपरं ॥
ोड़े कृत्वा वेङ्गला स्वामिदेहमुच्चैरूचे रोरुदन्ती सखेदं ।
कृत्स्नां रात्रीं यापयित्वापि नाथं देव्याः कोपाद्रक्षितुं नैव शक्ता ॥
कृतागसो मे श्वशुरस्य वादाद्देव्या हि मन्युः फलितस्तदद्य ।
ीहारयो वा नहि विश्वकर्म्मा देव्या रुषं वारयितुं समर्थः ॥
स्याः प्रभावान्नकुलाद्यस्ते हीनप्रतापास्त्रपया प्रजग्मुः ।
रसमन्त्रौषधवीर्य्यशौर्य्यो धन्वन्तरिश्चापि क्रिया प्रतस्थे ॥

विललाप पुनर्बाला वेङ्गला शोकविह्वला ।
गलन्नेत्राम्बुधाराभिराकीर्णवदनाम्बुजा ॥
द्रुतं क्षतवती काली प्रियं मे सर्व्वनाशिनी ।
जीवयामि हतं नाथं केनोपायेन साम्प्रतम् ॥
प्रफुल्लं ते मुखं नाथ मलिनं लक्ष्यतेऽधुना ।
यथा तमोहतः पूर्णो राहुग्रस्तो निशाकरः ॥

विवाहरात्रिर्भृशहर्षदायिनी यथासुखं सर्वजनैर्निषेव्यते ।
सा कालरात्रिर्मम नाथघातिनी दुर्भाग्यभाजां गतिरीदृशी मता
विवाहरात्रौ विधवास्मि जाता सतीति कापीह न वक्ष्यते माम्
पतिश्च मे व्याहरते न वाणीं सर्वं ममैतत् हृदयं दुनोति ॥
ततश्च पत्युर्वदने स्ववक्त्रं सलोचनं तन्नयने निधाय ।
वक्षःस्थले तच्चरणौ समर्प्योन्मत्तेव बाला क्षणमुल्ललाप ॥
प्राणप्रिय त्वं गुणरत्नशालो क्रन्दामि पार्श्वे न शृणोषि किं तत्
निशम्य वा किञ्च न भाषसे मां साङ्केष्व नेतुं यतसे न कस्मात्
त्वं भद्र गन्तासि किमर्थमेक एकाकिनः किं गमने शुभं स्यात्
यदा प्रिय त्वं भवसि श्रमार्त्तस्तदा भवेत् का परिचारिणी ते
एवं वदन्ती करुणं रुदन्ती स्वकेशपाशञ्च विमोचयन्ती ।
क्षणं स्ववक्षः खलु ताड़यन्ती तूष्णीं स्थिता मोहमुपेत्य बाला
विनष्टवेशा परिमुक्तकेशा ततो मुहूर्त्तं विललाप चैवम् ।
यावत् त्वहं जागरिताद्मि तावद् दृष्टा मया ते परिचारवर्गाः
निद्रागतायान्तु निशावसाने सर्वेऽपि ते कुत्र गता न जाने ।
धन्वन्तरिः कुत्र गतो हि नाथ क्व द्वारपाला नकुलादयस्ते ॥
सुवर्णवर्णं तव सर्वमङ्गं नीलप्रभं जातमिदं क्षणेन ।
वक्त्रं सफेनं कलुषे च नेत्रे विचेतनं नाथशरीरमीक्षे ॥
हतेन्द्रियः किं हृदयप्रियो मे मर्म्मच्छिदा मन्युशरेण भिन्नः ।
प्राणाधिकं मे प्रियरत्नमेतत् केनापि चौरेण हृतं क्षणेन ॥
आक्रोशन्त्या वेङ्कलाया लपन्त्याः श्रुत्वा नादं दूरतः साधुपः
नार्य्यो गेहे यास्तदा वर्त्तमानास्ताभिः सार्द्धं व्यग्रचित्ता सस
प्रविश्य सा लौहकटं ददर्श पुत्रं स्नुषाक्रोड़तले शयानम् ।
हीनप्रभं जीवनशून्यकायं ततस्तु रामा सहसा मुमोह ॥

बुध्य सा पुत्रमुखं निरीक्ष्य तच्छोकदग्धा स्ववधूं जगाद।
विदग्धभाले कुलनाशिनि त्वं जातासि मज्जीवननाशहेतुः॥
र्व्योऽनुरागस्त्वयि यादृशो मे जातोऽधुनासौ विपरीत एव।
ं ह्लादहेतुस्य विनाशहेतुराशालतामूलविकर्त्तनास्त्रम्॥
लखिन्दरो वंशधरः सुधानिधिः कुलाव्रतं सत्तनयोऽप्यजायत।
भयात्तदर्थं गृहमायसं कृतं तथापि देव्याः फलितो मनोरथः॥
तस्तं तवेदम् मलिनं न जातमलक्तचिह्नश्च न धूलिधूम्रम्।
सिन्दूररागो विकलो न भाले धाता किमेवं विहितं हि बाले॥

तूर्णं ततः समुपसृत्य चरस्तदीय-
श्चन्द्रं न्यवेदयदिदं सविषादवाक्यम्।
साधो प्रविश्य भुजगी तव लौहवेश्म
दष्ट्वा लखिन्दरमितो झटिति प्रतस्थे॥
सुत इति स कुमारश्चन्द्रदासो निशम्य
व्यथाविचलितचेता मत्तवद्भाषते स्म।
करतलधृतमूलैर्हन्त हिन्तालदण्डै-
र्हरि हरि मनसाया मुण्डपातं करोमि॥
तो द्रुतं लौहगृहं प्रविश्य निर्जीवपुत्रं रुदतीं वधूञ्च।
लोक्य दन्तैर्दशनान् निपीड्य साधुस्तदाहस्म पुनः सरोषम्॥

पुत्रो हतो मनसया यदि निश्चयोऽयं
तां पापिनीं मनसा न बिभेमि चित्ते।
एतेन हन्त यमदण्डसमेन दण्डे-
नाहत्य तां शमनसद्म नयामि तूर्णम्॥
तां मर्दयामि शिरसा सह चूर्णयामि
दूरीकरोमि शतधा परिखण्डयामि।

उत्पाटयामि तरसा प्रतिपातयामि
सम्पेषयामि हृदयञ्च विदारयामि ॥
पापीयसीं तनयभक्षणजातपुष्टिं
पश्यामि चेदहह तामहमेकवारम् ।
तां दर्शयामि भवनं त्वरितं यमस्य
संसिञ्चयामि परितापितजीवनं मे ॥
ततोऽसौ सनका चन्द्रं सविषादमभाषत ।
देव्या तवापराधेन सर्वे मे निहताः सुताः ॥
दुःखं यथोचितं नाथ भुक्तं पुत्त्रवियोगजम् ।
ततो नखिन्दरं प्राप्य तत्सर्वं विस्मृतं मया ॥

यदा श्रुतं रोदनमत्र बध्वास्तदाऽशनिर्मे हृदये पपात ।
बिभेद शोकानलदग्धदेहं तथापि जीवामि महाद्भुतं तत् ॥
पाषाणतुल्यं हृदयं ममेदं वज्राहतं नापि विदीर्य्यते तत् ।
प्राणाः कठोरा न च मां त्यजन्ति पापीयसीनां गतिरीदृशी हि
हा वत्स हा भूतलयामिनीश पापीयसीगर्भसमुद्भवोसि ।
विधौ हि वामे सति जीवलोके सर्वेऽभ्युपाया विफलीभवन्ति ।

सख्यो मे श्रूयतां दुःखं विधिनास्मि विडम्बिता ।
नासीद्भूतले नारी मादृशी दुर्दशान्विता ॥
यस्याश्च मन्युना सप्त सुता मे फणिना हताः ।
तापप्रदायिनी देवी क्वासौ न ज्ञायते मया ॥
न पापचक्षुषा दृष्टा न विषादो मया सह ।
भर्त्रा कृतापराधेन सापराधास्मि संकृता ॥
शोकेन दारुणेनास्मि सन्तप्ता व्यथितान्तरा ।
लज्जामन्युहतप्राणा कं पुनर्दर्शये मुखम् ॥

मेदिनी चेद् द्विधा भिन्ना स्वकीयाम्मामपापिनीं ।
तदा तापप्रशान्त्यर्थं प्रविशामि धरोदरं ॥
स्थापय मां मेदिनि ते महोदरे
यज्जीवथं धारयितुं न शक्यते ।
उक्तेति रामा शुचयाऽस्थिरा सती
व्यथां वदन्ती परिमूर्च्छिताऽपतत् ॥
मा क्रन्दोत्तिष्ठ मा क्रन्द काचिदित्यब्रवीत् सखी ।
का च रामा करं धृत्वोत्तोलयामास तां ततः ॥
काचित् सखी जलं दत्वा प्रक्षाल्य मुखपङ्कजम् ।
पुनः पुनरुवाचेदं सनके सुस्थिरा भव ॥
अथासौ वेङ्कलाऽवादीत् श्वश्रूं स्वीयमनोरथम् ।
वादेन मनसादेव्या ईदृशी दुर्दशा मम ॥
न मे तत्रापराधोस्ति केवलं दुःखभागिनी ।
उपायो दृश्यते नान्यस्तस्याः करुणाया विना ॥
अतो देवीं समुद्दिश्य मातः शङ्करनन्दिनीम् ।
गमिष्यामि श्रवेनाहं दर्शनं यत्र लभ्यते ॥
श्रुत्वैतद्वचनं नार्य्यः सर्व्वा जाताः सविस्मयाः ।
सस्नेहकोपनाः काश्चिद्रुषुस्तां रक्तलोचनाः ॥
मृतस्य जीवनं कश्चिन्न प्रत्येति त्वया विना ।
अभाग्या या भवेन्नारी तस्याः स्याद्बुद्धिरीदृशी ॥
नो देवी नापि देवो वा मृतं जीवयितुं क्षमः ।
न दृष्टो न श्रुतः क्वापि दष्टः सर्पेण जीवितः ॥
एषा ते दारुणा बुद्धिः प्रतिज्ञा चैव तादृशी ।
दारुणं भाषसे बाले किमेतत्तेऽद्भुतं वचः ॥

सौभागेऽयमासि यक्ता चेन्मृतं जीवयितुं पतिम् ।
तदा कथं मृतो ब्रूहि हतभाग्ये पतिस्तव ॥
ब्रूतेस्म बेङ्कला ताश्च आर्य्यिकाः श्रूयतामिदम् ।
कृपया ब्रूत मे श्वश्रूं प्रदातुं त्वरितं ञ्रवम् ॥
तूर्णं प्रत्यागमिष्यामि जीवयित्वा मृतं पतिम् ।
न भवाम्युपहासाय सत्यं जानीत मद्वचः ॥
पुरन्ध्रीणां गणास्तत्र समागत्य ततःपरम् ।
बेङ्कलायाः प्रबोधार्थमूचुस्तस्या हितं वचः ॥
किमेतद्वेङ्कले ब्रूषे बाले मत्तप्रलापिनि ।
क्व त्वं बाला क्व सा देवी क्व मृत्युः क्व च जीवितम् ॥
एकाकिनी शवं नीत्वा कुत्र यास्यसि साम्प्रतम् ।
नाश्रमो विद्यते देव्या नासौ भवति मानवी ॥
कस्य वाक्येन वा बाले त्वमेवं प्रत्ययं गता ।
उत्साहिनी येन जाता मृतनाथस्य जीवने ॥
बालवैधव्यदग्धासि दुर्दैवेन विड़म्बिता ।
कठिनोऽयं मनस्तापो जातस्ते किं करिष्यसि ॥
पूर्णेन्दुसदृशं मातर्गलन्नेत्राम्बुसङ्कुलं ।
दृष्ट्वा तव मुखं बाले हृदयं नो विदीर्य्यते ॥
पश्येदं तव दुःखेन परितापितचेतसां ।
अश्रुधाराभिरस्माकं कर्द्दमीभूतभूतलं ॥
तत्रान्ये सन्ति ये लोका हाहाकाराय कल्पिताः ।
शोकदुःखपरीतास्ते तद्वाचा विस्मयान्विताः ॥
ततस्तामब्रुवन् सर्वे बाले किं दृश्यते क्वचित् ।
मङ्गलं साधुशीलानां हन्त कालस्वभावतः॥

ततस्ताः कुलकामिन्यः श्रुत्वा सर्व्वमिदं वचः।
स्वस्वकर्णौ करौ दत्त्वा प्रोचुः सर्व्वा यथोचितम्॥
कङ्कतीदशना भासि बाले दग्धकपालिके।
इत्थं भाषसे बाल्ये पापिनी क्लेशभागिनी॥
बाल्ये हि बाले विधिना हतासि शान्तप्रकृत्या च विवर्जितासि।
गुरुर्वियोगात् परितापितासि दुर्द्दैवयोगेन विमोहितासि॥
कुरूनेत्रे नवयौवनासि हताशया चञ्चलचित्तवृत्तिः।
भवन्ति बालाः सरलस्वभावाः पूर्व्वापरस्वार्थविवेकशून्याः॥
तत्त्वमेकासि शवद्वितीया प्रस्थातुकामा न च भीतचित्ता।
ज्ञानासि नो कामिनि गम्यमार्गं तथापि गन्तुं यतसे किमेतत्॥
अल्पबुद्धिश्च वयं प्रवीणास्त्वं शोकदग्धासि वयं त्वशोकाः।
वयं सुधीरास्त्वमधीरचित्ता बाले त्वमस्मद्वचनं शृणुष्व॥
ततो निषेधाम इहैव तिष्ठ किं निष्फलं यासि जले शवेन।
अगम्यमार्गे सुलभा न यात्रा तच्चिन्तया ब्रूम इदं हितार्थं॥
ध्रुवं त्वां ब्रूमहे बाले याहि मा वाहिनीजले।
तवैषा जीवनाशा हि जीवनाशाय कल्पते॥
इत्युक्ता वेङ्कलोवाच श्वसन्ती रुदती मुहुः।
अशमश्रुप्रपातेन स्फीतरक्ताभलोचना॥
मा निषेधत कामिन्यः कुरुध्वमनुमोदनम्।
दयितं जीवयिष्यामि सत्यं सत्यं वचो मम॥
साधनस्य फलेनाहं पूर्व्वजन्मकृतस्य मे।
प्रसन्नां मनसां कृत्वा साधयामि मनोरथम्॥
नेष्यामि मे मृतपतिं मनसासकाश-
मेष्यामि जीवितपतिमदनुग्रहेण।

द्रक्ष्यामि वः शशिमुखान्यनु मासषट्कं
वक्ष्यामि नश्च कुशलं पुनरेत्य युष्मान् ॥
पुनर्निवेदये दुःखं युष्माभिः श्रूयतामिदं ।
दोषेणैकस्य वाऽन्यस्य दुर्दशाः किम्भवन्ति न ॥
कर्म्मणा दूषिता नास्मि भवतीभिर्विचार्य्यताम् ।
विना स्वकर्म्मदोषेण जाताहं पापभागिनी ॥
श्वशुरस्यापराधेन पतिर्मे फणिना हृतः ।
युष्माभिर्भाष्यते मह्यं दूषणं कथमीदृशम् ॥
गुरूणां तावतां मध्ये स्त्रीणां स्वामी परो गुरुः ।
तासां पतिवियोगे हि जीवने किं प्रयोजनम् ॥
यदर्थं विधवा नार्य्यो जाताहं हतभागिनी ।
न जीवितुं विना तेन प्रोत्सहे मरणं वरम् ॥
एकापराधादपरस्य दण्डो जातः श्रुतश्चेति मया पुराणे ।
सीता हृतासीत् खलु रावणेन महोदधिर्बद्धदशां गतोऽभूत् ॥
राज्यं नष्टं दृश्यते राजदोषादापद्ग्रस्तास्तत्प्रजानां समूहाः ।
दोषाभावेऽपीह दुःखं भजन्ते तद्रूपं मे दुःखजातं प्रजातम् ॥
अस्तु तद् गन्तुकामाहं भवतीभ्यो निवेदये ।
यथा लप्स्ये प्लवं शीघ्रं युष्माभिस्तद्विधीयताम् ॥
अद्यैव तं समाश्रित्य सन्तरीतुं नदीजलम् ।
मनसा चरणद्वन्द्वं ध्यात्वा गच्छामि निर्भयम् ॥
विश्वासो मे दृढोऽस्त्येवं जीवयामि मृतं पतिम् ।
नोचेन्मरिष्ये तत्राहं ततोऽपि मङ्गलं भवेत् ॥
विधिना लिखितं भाले यद्दैवघटनं मम ।
सम्भोक्ष्यामि तदेवाहं कोऽन्यथा कर्त्तुमर्हति ॥

गन्तुकामा ततो रामा बेहुला पतिसम्बला ।
मनसा मनसां ध्यात्वा ययौ चम्पानदीतटम् ॥
पुनश्च सनकोवाच तां तितीर्षुं नदीजलम् ।
क्व यासि साम्प्रतं बाले त्यक्तलज्जाभया सती ॥
बालिका युवती दृष्टा का वा नारी मृते पतौ ।
शवं नीत्वा परिभ्रान्ता न श्रुता भुवनत्रये ॥

तां बेहुलोवाच दृढप्रतिज्ञा निबोध मातर्वचनं ममैतत् ।
देवीप्रसादेन हतेन्द्रियं ते पुत्रं ध्रुवं द्रक्ष्यसि जातजीवम् ॥

विश्वासाय ततस्तस्याः पुनर्जीवनलक्षणाम् ।
दर्शयामास तां बाला तत्प्रतीतिर्यतो भवेत् ॥

घराटिकासञ्चिततैलविन्दुना प्रज्वालिता दीपशिखा गृहान्तरे ।
षण्मासकालं समुज्ज्वलेद् यदि जानीहि पुत्रस्तव जीवितो भवेत् ॥
रातीयेषे यन्मया पक्वमन्नं पात्रे कृत्वा प्रोथितं तत्समस्तं ।
कुर्व्यां भूमौ दाडिमस्यास्य मूले नष्टं नो चेत्तद्भवेज्जीवितोऽयम् ॥
यावद्भवत्याः सुत एष जीवितो नवान्नमेतत् पुनरेत्य भक्षति ।
गृहे त्वदीयेऽभिनवं यथावत् त्वयैष मातः समयः प्रतीक्ष्यतां ॥

इति श्रीभगवच्चन्द्रप्रणीते बेहुलामन्दिरे बेहुलाप्रबोधनं
नाम तृतीयसङ्कल्पना ।

# वेहुलानखिन्दरम्।

## चतुर्थसङ्कल्पना।

अथासौ भेलया नद्यां गमनाऽनुमतिं तदा।
ययाचे वेहुला लोकान् पतिजीवनकाङ्क्षया॥

प्रणम्य तेषाञ्चरणारविन्दं सा दुःखिनी तत्र विनीतवाचा।
स्वाभीष्टसिद्ध्यै पुनरित्युवाच कुरुध्वमाशीर्व्वचनं शुभं मे॥

जायेत पथि नो विघ्नो नाथो मे जीवितो भवेत्।
आगच्छेयं कृतार्थाऽहमेवं सा प्रार्थयत् पुनः॥

उपश्रुत्य वचस्तस्यास्तामूचुस्ते विषादिताः।
भद्रं भवतु ते बाले यदि यास्यसि निश्चितम्॥

शिवास्ते सन्तु पन्थानो मा प्रत्यूहा भवन्तु ते।
देवी ते पथि कुर्व्वीत शुभमित्यर्थयामहे॥

श्वश्रूमूचे ततो बाला प्रणम्येति पदाम्बुजम्।
जननि त्वं गृहं गच्छ मा रोदीः सुस्थिरा भव॥

दुःखाम्भोधिनिमग्नैवमवदद्वेहुला यदा।
श्वेतकाकस्य वेशेन मनसा तामुपस्थिता॥

स श्वेतकाको विपरीतशब्दमुच्चैस्तदानीं सहसा चकार।
देवीति विज्ञाय तमादरेण सा वेहुला साश्रुमुखी बभाषे॥

न काक पश्चोर्विरहे विषादो जातो यथाक्रन्दमेतदद्य।
पिता च माता मम दूरदेशे दुःखं न मे तौ विदितुं समर्थौ

निशम्यतामत्र निवेदनं तत् संवाददाता न च मे त्वदन्यः ।
यदि त्वमङ्गीकुरुषे प्रयातुं महोपकारो हि भवेत्ततो मे ॥
चम्पातरोर्मूलमधिष्ठितोऽसौ शुश्राव सर्वं यदुवाच बाला ।
विनीतवाचा किल वेङ्कलाया जातः स काकः करुणार्द्रचित्तः ॥

श्वेतकाक उवाच ।

दूतोऽस्मि जातस्तव वेङ्कलेऽहं गन्तुं समर्थो भणितुं न किञ्चित् ।
कयाकयैवं करटस्य वाणी कया च वाचा प्रतिबोधयामि ॥

वेङ्कलेत्यवादीत् ।

ममाङ्गुरीयं मणियुक्तमेतत् स्वत्रेण कुर्व्वां तव चञ्चुबद्धम् ।
तद्गच्छ नीत्वा मम तातसद्म समर्पणीयं जननीपुरस्तात् ॥
छादे ततस्तस्य निकेतनस्य वसत्व्यमुड्डीय तदा त्वयैव ।
दृष्ट्वा तया तद्वरणाङ्गुरीयं दुर्भाग्यमेतत् मम वेदितव्यम् ॥

वाच्याविदं कया वाचा पितरौ च सहोदराः ।
प्रतिकूले विधौ जाते दुःखं स्यादनिवारितम् ॥
मयि स्नेहवतोः पित्रोः सोदराणाञ्च दर्शनं ।
यतो मे व्याहतं धात्रा किमभाग्यमतःपरम् ॥
एवं निगदितो गन्तुमुत्सुको बलिभुक्पतिः ।
यत्रासीद् वेङ्कलामाता तत्राऽसौ समुपस्थितः ॥

हृत्वाऽङ्गने हीरकमङ्गुरीयमुड्डीय काको निषसाद चाले ।
आदाय चञ्चुं स कठोरशब्दं चक्रे बुभुक्षार्त्त इवच्छलेन ॥

ततोऽमला वणिक्पत्नी वरणस्याङ्गुरीयकं ।
तदभिज्ञाय साऽऽरेभे क्रन्दन्ती भाषितुं तदा ॥
यज्जामातुः करे दत्तमानीतमिह तत् कथम् ।
वायसेन कुतो लब्धं न जाने किममङ्गलम् ॥

कुतस्त्वमागतः काक लक्ष्यसे व्यथितः कथम् ।
ब्रूहि मे यदि जानासि घटनं सत्यमीदृशम् ॥
विशेषमेतस्य निबोध भद्रे जानेऽखिलं दुर्घटनं तदीयम् ।
नखिन्दरो लौहगृहेऽपि सुप्तः कालेन सर्पेण हतो निशान्ते ॥
त्वत्पुत्री वेङ्कला बाला व्यग्रा जीवयितुं पतिम् ।
अङ्कमारोपयित्वा तं प्लवेन प्लवते नदीम् ॥
प्रत्यानयन्तु तां बालां ये तस्याः स्वजना जनाः ।
काकः कया कया वाचा सन्दिश्यैतत् खमुद्ययौ ॥
श्रुत्वा कठोरममलाऽस्फुटमस्य वाक्यं
जाताभितप्तहृदया स्वसुतानुवाच ।
पुत्राः कथं परभृताऽऽहृतमङ्गुरीयं
नूनं तदेव हृदयं विकलीकरोति ॥
व्यादाय चञ्चुपुटकं विपरीतरावं
रौतिस्म वायसपतिः किमिदं ममाग्रे ।
किं वेङ्कला विपदि मे पतिता न जाने
तद्गच्छताद्य सहसा सह वस्तुभारैः ॥
पुत्रिका वेङ्कला बाला तूर्णमानीयतां सुताः ।
द्रव्यसम्भारमादाय गम्यतां भारवाहिभिः ॥
सायस्तत्र समागत्य श्रुत्वा वायसभाषितम् ।
आनेतुं तनयां तूर्णं व्याकुलस्तान् समादिशत् ॥
मिष्टलड्डुकसङ्घातं शर्कराक्षीरनिर्मितम् ।
गुडमिश्रितखाजाश्च रम्भाश्चाम्रतचम्पकाः ॥
कदूष्मापूर्णसंमिष्टमोदकानि बहूनि च ।
सुरसानि च पक्वानि सङ्गृहीतानि सत्वरम् ॥

नीत्वा सम्भारमेतेषां भारवाहैश्चलिष्णुभिः।
यातास्ततस्त्रयः पुत्त्रास्तां समानेतुमग्रजाः॥

गच्छन्तस्ते श्वशुरैर्नीत्यं पत्या सार्द्धं बेहुला सायकन्या।
प्राणोऽस्माकं बालिका नाभिनन्द्य स्रोतस्वत्यामुद्यता सा प्रयातुं॥

लोकेभ्यस्ते तादृशीं बेहुलाया
वार्त्तां श्रुत्वा शोकसन्तप्तचित्ताः।
तूर्णं चिन्ताव्याकुलाः सायपुत्त्राः
जग्मुर्नद्यास्तीरमुद्दिश्य सर्व्वे॥

नाम्ना ते भ्रातरः ख्याताः सुबलः सुन्दरो हरिः।
बभूवुरागतास्तत्र यत्रासीद् बेहुलाऽऽकुला॥

चिन्ताव्यग्रान् सोदरान् स्वान् विलोक्य
क्रन्दन्ती सा वाष्पधाराभिषिक्ता।
तानित्यूचे श्रूयतां भ्रातरो मे
भाग्याद् दृष्टं वो मुखाब्जं मयाद्य॥

विवाहकालरात्रौ मे यस्याः सर्पहतः पतिः।
तस्याः स्वामिविहीनाया जीवने नास्ति मङ्गलम्॥

अतोऽस्मि गन्तुकामाऽहमाश्रित्य मनसा व्रतम्।
जीवयामि पतिं देव्याः प्रसादेन न संशयः॥

यस्याः कोपहतस्तस्याः प्रसादेन विना पुनः।
न भवेज्जीवितो भर्त्ता तत्तस्याः शरणं गता॥

व्यथन्ते स्वजनाः सर्वे हसन्ति रिपवः पुनः।
लोकानामीदृशीरीतिर्विपत्तौ विद्यते चिरम्॥

माता पिता च वक्तव्यौ ब्रतनाथेति बेहुला।
भर्त्तारं जीवयित्वा सा पुनः प्रत्यागमिष्यति॥

ज्येष्ठभ्राता सुबल उवाच।

वेङ्कले सोदराऽस्माकं साधोः सायस्य पुत्रिका।
समाश्वसिहि किं यासि गृहीत्वा स्वामिनः शवम्॥
निवर्त्य गृहमागच्छ वेङ्कले स्वल्पधीरसि।
शवेन सह ते यानं नोचितं मन्यते मया॥

विहाय सर्वं यदि गम्यते त्वया म्रियेत माता न पिता च जीवति।
सर्वे तव स्नेहविशेषभागिनो वयं भवामो हतजीविता इव॥

वेङ्कलोवाच।

विना पुनर्जीवितमेव नाथं नो यामि गेहं प्रतियात यूयम्।
दण्डायमानास्तटिनीतटान्ते किं निष्फलं क्रन्दथ सोदरा मे॥

भ्रातर ऊचुः।

सहोदरे त्वं विपरीतभाविणी विशेषतो बालधियाऽल्पबोधिनी।
इयं दुराशा न कदापि सिध्यति मृतो हि जीवो न पुनश्च जीवति।
इत्थं लोकाः कूलयोर्वर्त्तमानाः प्रोचुस्तां वेङ्कले गच्छ गेहम्।
क्रन्दन्त्युच्चैर्भ्रातरस्ते सकाशे त्यक्तस्नेहा निष्ठुरा किं विभासि॥
रात्रीमेकां स्वामिवक्त्रं विलोक्य पूर्वस्नेहो विस्मृतः किं त्वयाद्य।
एषा बुद्धिर्नैव सौभाग्यदात्री बुद्धेर्दोषाद्भाग्यहीनासि दृष्टा॥
त्वं षोड़शी कामिनि मोहिनी स्वयं विलोक्य ते रूपमिदं मनोहरं
जितेन्द्रियाणां विदुषां मतिभ्रमो भवेत्ततः का च कथा दुरात्मनां

दुःखेन ते सुमुखि ये व्यथिता भवाम-
स्त्वां ते प्रबोधयितुमेव वयं प्रवृत्ताः।
बालाऽबला पयसि नक्रसमाकुले त्वं
गन्तुं किमिच्छसि भयं न च विद्यते ते॥

नीरं प्रतीरं गहनस्य काननं शङ्काकुलं सर्वमिदं न बुध्यसे।

अतोऽस्मदीयं वचनं प्रतीयतां निश्चयतां धीरधियावगम्यताम् ॥
शुश्राव नैषा वचनं हितैषां मनोगतं नापि जहौ स्वकामम् ।
स्वनाथवक्त्रं मुकुरीकृतेव निमेषहीनस्पृहयालुनेत्रा ॥

वदन्ति नागराः सर्वे चन्द्रहासो न रोदिति ।
वेङ्कलासोदरा एवं दृष्ट्वा विस्मयमागताः ॥
भगिनीं वेङ्कलां मुग्धां समालोक्य तथाविधाम् ।
क्रन्दन्तोऽभिवदन्ति स्म वयं यामस्त्वया सह ॥
त्वया विना न गच्छामो वक्ष्यामः किञ्च मातरम् ।
अतो भद्रे समागच्छ गृहं यामस्त्वया सह ॥
त्वया विना गृहेऽस्माकं नास्ति कापि सहोदरा ।
त्वयैकया विना माता न जीवेत् शुचया ध्रुवम् ॥
किन्ते भविष्यति विहाय सहोदरेऽस्मान्
नीत्वा शवं जिगमिषा सलिले शुभाय ।
एषा हि सिध्यति न ते पतिजीवनाशा
तन्मर्तुमिच्छसि कथं सहसा शवेन ॥

त्वमग्रे जननीसमक्षे पश्चात् स्वयं भोजयसे त्वमस्मान् ।
प्रधाना भवसि त्वमेका वक्तव्यमस्मिन् वद किं तवास्ति ॥

वेङ्कलोवाच ।

यदि जीवेत मे नाथस्तदा सर्वं सुशोभनम् ।
नहि सोदरपत्नीभिः सहवासो हि रोचते ॥
ताभिः सार्द्धं भवेन्नित्यं कलहो मे सहोदराः ।
बालवैधव्यदग्धानामीदृशी दृश्यते दशा ॥
बाल्ये या विधवा नारी बन्धुस्तस्याः प्रशस्यते ।
विना देशप्रवासिद्धकठोरव्रतपालनम् ॥

अतो मे जननी वाच्या सा करोतु सदाशिषः।
शक्नोमि येन मे नाथं हतं जीवयितुं पुनः॥
भो भ्रातरः कुरुध्वं मे प्रियं यदभिधीयते।
अस्मिन् चम्पातरोर्मूले द्रव्यजातं निधीयतां॥
स्वामिनं जीवितं कृत्वा यद्यप्यागम्यते मया।
सर्व्वमुत्थाप्य भोक्ष्यामि तदा द्रक्ष्यामि मातरं॥
यूयं रोदिथ व्यर्थं प्रिया मे सोदराः कथम्।
सति मे जीविते नाथे पुनर्द्रक्ष्यामि वो मुखं॥
मा क्रन्दत नदीकूले भवनं प्रतिगच्छत।
वदन्ती वेहुला भ्रातृनित्युवाच मनोगतम्॥
भगिन्या भवने यानान्निराशास्ते सहोदराः।
चम्पामूलतले चक्रुर्द्रव्यजातं निधापितम्॥
सशोकदुःखेन हता रुदन्तो जग्मुः स्वदेशाभिमुखं ततस्ते।
अन्ये तु तेषां सहवर्त्तमाना आरेभिरे रोदितुमत्र सर्व्वे॥
देवीप्रिया धीरमतिः प्रभाविनी सन्धानवन्धस्य विशेषवेदिनी।
सन्दंशवक्रीकृतनागनागिनी भुजङ्गपेटीः स्वकरेण धारिणी॥
छिन्नाहिपुच्छं वसनान्तबद्धं स्वयं समानीतवती तदा सा।
नखिन्दरं क्रोड़तले निधाय शवं समारूढ़वती नदीस्थम्॥
वातोत्थवीचिहिल्लोलविलोलायितयाथ सा।
भेलया निर्ययौ ध्यात्वा देवीपादसरोरुहम्॥
आह्नौ चम्पातलं घट्टं सन्त्यज्य गमनोन्मुखी।
उपातिष्ठत सा बाला कुमारवन्दरं ततः॥
ततस्तु देशमुल्लङ्घ्य क्रमशस्त्रिदिनात् परम्।
दुवराजपुरं याता नयखण्डं ततः परम्॥

बहुदूरं विनिर्गत्य दामोदरमुपस्थिता।
तत्प्रवाहबलेनास्या धावमानः शवस्ततः॥
वङ्कानामनदीशाखामाययौ निरुपद्रवः।
सलिलं मधुरं यस्या निर्म्मलं वह्निदीपनम्॥
तान्तु शाखानदीं प्राप्य क्रमशः समुपस्थिता।
घोझटीपूर्वकं नाम गोविन्दपुरमुत्तमम्॥
ततःपरं वर्द्धमानं विख्यातं नगरं भुवि।
तत्रासील् लोकविख्यातः क्षत्रवंशसमुद्भवः॥
वीरसिंहो महातेजा भूपतिर्भूभृतां वरः।
तस्य वंशधरा जाता धीरसिंहादयो नृपाः॥
यत्र विद्यावती विद्या सुन्दरो विदुषां वरः।
आस्तां लोकेषु विख्यातौ दम्पती तौ गुणान्वितौ॥
विद्यासुन्दरयोः कीर्त्तिर्विद्यासुन्दरयोरिव।
अद्यापि मूर्त्तिमत्येव विद्यते लोकशास्त्रयोः॥
ततः सा वर्द्धमानस्यादूरे गङ्गापुरं ययौ।
मनसामायया तत्र शवस्तस्या विघट्टितः॥
निर्गताः कदलीकाण्डा वंशकीलैः पृथक्कृताः।
मानवास्तेन भाषन्त एलोगङ्गापुरं क्षिति॥
[दे]वीमायाविह्वला बेङ्गलासीन्मग्नव्याप्ता रोदन्ती निशायां।
[ल]ोभाकृष्टाः प्रेतकाये जलौका लग्नाः सा तानापनेतुं समर्था॥
[ए]वं दैवं दुर्विपाकं विलोक्य रम्भाकाण्डाच्छिन्नभिन्नाश्च जाताः।
[न]ान्योपायोऽस्तीह तच्चिन्तयित्वाऽऽरेभे स्तोतुं बेङ्गलोद्दिश्य देवीम्॥
नमस्ते वरदे देवि विश्वकल्याणकारिणि।
विपत्तौ रक्ष मां मातरभये सिद्धिदायिनि॥

माया ते दारुणा देवि मनसे करुणां कुरु ।
शवोऽयं कीलसंयुक्तो भवतु त्वत्प्रसादतः ॥
मनसा स्तवसन्तुष्टा तां मायां सञ्जहार सा ।
तदाज्ञया युक्तकीलो जातस्तस्याः शवस्ततः ॥
अथासावनुकूलेन रयेण पवनस्य हि ।
त्यक्त्वा गङ्गापुरं बाला क्रमशो देपुरं ययौ ॥
विलोक्य रजनीशेषे प्रभाततरुणारुणम् ।
ईषत्प्रफुल्लचित्ता सा दिनादौ पद्मिनी यथा ॥
आगते देपुरं तस्मिन् शवदेहे तदाऽभवत् ।
शरीरं द्विगुणं तस्य स्फीतं दुर्गन्धदूषितम् ॥
मेङ्कलायास्तथाप्यस्मिन् प्रणयासक्तचेतसः ।
नानुरागोऽभवन्न्यूनो वरं प्रीतिर्विवर्द्धिता ॥
स्फीतं शवं जीर्णतमञ्च ज्ञात्वा देवीं सखेदं समुवाच बाला ।
देवेशि जानामि तव प्रभावं क्रन्दामि नित्यं न शृणोषि किं तत् ॥
निपतति जलदानां श्रावणे वारिधारा
शरदि समुपयाते सा पुनः शान्तिमेति ।
मम तु पतति धारा नेत्रयोर्दुर्निवारा
नहि मम विरतिं सा भाग्यदोषात्प्रयाति ॥
निरवधि तव सेवातत्पराहं नितान्तं
तदपि तव दया किं जायते नापि चित्ते ।
भवभयहरणं त्वत्पादपद्मं शृणोमि
किमु मयि विपरीतं दृश्यते तद्बिभेमि ॥
इत्युक्त्वा सा ययौ तस्मान्नीयादापुरमुत्तमम् ।
नर्म्मदानामकं तत्र तीर्थमास्ते प्रसिद्धिमत् ॥

तदैव तीर्थमासाद्य बेहुला नर्म्मदाजले।
अवतीर्य्यावगाह्यासौ स्नानं कृतवती सती॥
आस्तीकजननीमन्त्रं सञ्जप्य विधिवत्ततः।
जगाम केदुयाग्रामं यत्र देवी प्रभान्विता॥
केदुयावासिनी नाम्ना विख्याता विषहारिणी।
तस्या हि स्वर्णमयी मूर्त्तिस्तत्रास्ते सुप्रतिष्ठिता॥
ादनत्रयं व्याप्य मनस्यनन्दिनीमपूजयद्भक्तियुता हि बेहुला।
ततो जपन्ती मनसामनुं तदा शुश्राव साऽऽकाशसरस्वतीं हिताम्॥
सुरेन्द्रलोकं दयितस्तवायं गत्वा ध्रुवं जीवनमेष्यतीति।
कालं क्षिपस्यत्र कथं जपेन तत्रैव गन्तुं त्वरितं यतेथाः॥
आकर्ण्य दैवतावाणीं हृष्टचित्ताऽभवत् सती।
केदुयापुरतो बाला ससाद पुरमादमम्॥
यत्रैकः श्लीपदी मत्स्यान् हन्ति तीरसमाश्रितः।
बेहुलाक्रमशस्तत्र प्लवेन समुपस्थिता॥
जङ्घाजानूरुपादेषु श्वयथुः प्रबलो यदि।
तत् श्लीपदं विजानीयाज्जायते यत् कफोच्छ्रयात्॥
एवं शोभितपादस्य तस्य भार्य्याचतुष्टयी।
शोभते भवने नित्यं तद्रूपरूपशालिनी॥
भक्तमव्यञ्जनं ताभ्यो विना मत्स्यं न रोचते।
अतो नित्यं स गृह्णाति मत्स्यान् तत्र नदीजले॥
श्लीपदी मत्स्यघातार्थं नीत्वा मत्स्यकरण्डिकाम्।
सरज्जुबड़िशं क्षिप्त्वा तीरे तिष्ठति सर्व्वदा॥
वलोक्य तस्याः सुमनोहरं वपुः स कामसम्मोहनबाणमोहितः।
ाभावतीनां विनयेन सादरं घोराननः स्वाभिमतं मनोरथम्॥

कुरङ्गनेत्रे वसति स्तव क्व वा को वा नरस्त्वामवलम्ब्य वर्त्तते।
एकाकिनी नक्तयुते हि पार्श्वसि श्रवेन किं यासि विनाऽवलम्बनं॥
योग्यो न पालस्तव कोपि दृश्यते कालं वृथा व्येसि जले भयङ्करे
वृथा हि ते सुन्दरि याति यौवनं सुलोचने त्वं शृणु मे शुभं वचः
आगच्छ कल्याणि मदीयगेहे कुरुष्व मे मोहिनि जीवदानम्।
भव प्रिया मे गृहिणी प्रधाना सर्व्वं सुखं भुङ्क्ष्व सदाऽऽदरेण॥
वाचाऽनया तस्य विहस्य वाला प्रोवाच रे मीनधरप्रधान।
जीवच्छरीरो गतिशक्तिहीनः किं स्त्रीपदिन् जीवितुमिच्छसि त्वं॥
किं याचसे मामवलां न मृत्युं कुर्य्यात् स शीघ्रं तव दुःखशान्तिम्।
निरन्तरं तिष्ठसि घोरनद्यां निक्षिप्य रज्जुं वड़िशेन सार्द्धम्॥
चीरं सुजीर्णं परिधानवस्त्रं नान्नं गृहे सम्भवति त्वदीये।
समत्स्यकस्त्रीपदतीव्रगन्धघ्राणेन सुस्था हि कथं स्त्रियस्ते॥
त्वं नागरो वृद्धवया नितान्तं विभूषणं ते कठिनी च कर्णौ।
पश्यामि किं सुन्दररूपमेतत्त्वन्वस्ति ते ब्रूहि गुणोपि कोन्यः॥
विज्ञाय किं मामवलां दुरात्मन् पापाशयो भावितुमुत्सुकोऽसि।
त्वं वामनश्चन्द्रमसं दिधीर्षुरुत्क्षिप्य हस्तौ किमुपस्थितोसि॥

आकर्ण्य निन्दितवचो निजगाद शौण्डी
किं सुन्दरि व्यथयसे कटुवाक्यवाणैः।
किं शोथजं चरणगौरवमाविलोक्य
पापाशयं सुमुखि मामवमन्य चित्ते॥
किं दूष्यन्ते गुणिजनगुणा व्याधिना देहजेन
मन्दा बुद्धिस्तव सखि यतो बुध्यसे वाक्यहृष्या।
नार्य्योऽनिन्द्या मम तु वसतावन्तरङ्गाश्चतस्रः
स्वच्छन्देन स्थिरतरसुखं सानुरागं लभन्ते॥

चित्तं तासामधरविलसत्पर्णरागेण मुष्टं
भालश्वासां विकसति सदा सुभ्रु सिन्दूरलिप्तः।
शोथप्राणां न भवति शुभं केवलं तत् क्षमस्व
त्वां लब्ध्वा मे हरिणनयने पद्मनार्यो भवन्तु॥
परिहर जलयानं रक्ष वाक्यं मदीयं
चल चल भवनं मे जीवकल्याणदात्रि॥
सुमधुरवचनं ते चित्तचाञ्चल्यहेतु-
स्तव चरणसरोजे मस्तकं पातयामि॥
सक्रोधं सा तदोवाच रे पापिष्ठ नराधम।
कटूक्त्या भाषसे किं मामबलामसतीमिव॥
विडम्बयितुकामश्चेत् फलं प्राप्नोषि तत्क्षणात्।
प्रभावेण सतीत्वस्य भस्मीभूतो भविष्यसि॥
[?]माह शोथी सहसा विहस्य त्वामेव गच्छामि बलं प्रकाश्य।
[?]लं तरीत्वा स्वकरेण धृत्वा कियद्धि दूरं गमनेसि शक्ता॥
[?]जानामि सर्वं कुलटाचरित्रं तथा सतीत्वस्य सुशीलवत्त्वम्।
[?]वाद्य वाचा हृदयं विदीर्णं श्रुता कदा नापि कटूक्तिरित्थम्॥
तदपि तव हितार्थं वक्तुमीहे सयत्नं
व्रजमिह वकदूरं निक्षिपोत्तिष्ठ तीरम्।
मम गृहमनुगच्छ प्रीतिवाक्यं गृहाण
मनसि धर सतीत्वं कश्च लाभो विरोधे॥
पयसि झटिति दूरं तां तरन्तीं निरोद्धुं
स चपलमतिरासीत् स्त्रीपदी तत्क्षणेन।
द्रुतमनुसरमस्या गन्तुमीहाञ्चकार
नतु गुरुपदभाराद्दुत्तरीतुं समर्थः॥

पश्चात्तरन्तं ग्रहणे प्रवृत्तं विलोक्य सा श्लीपदिनं शशाप ।
तयाभिशप्तः स इदं वभाषे हे देवि निस्तारय मां विपन्नम् ॥
मुखेन नासापुटकेन शोथी पीत्वा पयो मृत्युदशोपपन्नः ।
तामब्रवीदीश्वरि रक्ष रक्ष विपत्परीतं गतिशक्तिहीनम् ॥

त्वं किं भवानी भवभीतिहारिणी
लक्ष्मीः किमेवासि विपत्तिनाशिनी ।
त्वं दुर्गतानां दुरितापहारिणी
त्रातुं जगन्मानवमूर्त्तिधारिणी ॥

तदा तु बाला विनयेन तस्य स्तवेन तुष्टा सरला दयार्द्रा ।
निरीक्ष्य सा कातरचित्तमेनं ददौ वरं भीत तटं लभस्व ॥

ततोऽभूद्बेहुला सुस्था मनसा व्रतधारिणी ।
विनान्नपानप्रक्षीणा तरन्ती क्रमशो नदीम् ॥
उत्तीर्य्य शोथिनो घट्टं गच्छन्त्या रजनीं दिवम् ।
कियन्तो दिवसा स्तस्या व्यतीता निरुपद्रवम् ॥
एकदा पथिकास्तीरे चलन्तो रूपमुत्तमम् ।
पश्यन्तः सस्पृहं तस्याः प्रोचुर्मुग्धाः परस्परम् ॥
कथमेकाकिनी नारी तरीष्यति नदीजलम् ।
सदायादोगणाकीर्णं गम्भीरं यत्र निःस्थलम् ॥
तीरं भयानकं स्थानं लोकानां दुर्गमं निशि ।
क्वापिच्च दुर्जनव्याप्तं सुखं नैषा गमिष्यति ॥
हिल्लोलेन शवस्तस्याः सत्वरं गन्तुमक्षमः ।
जाता पुनः शवं नीत्वा पराधीनेयमङ्गना ॥

दिवानिशं मन्त्रजपेन तस्याः कालोऽपनीतोऽस्ति विनान्तरायम् ।
अतो हि देवीचरणारविन्दद्वन्द्वस्मृतिलक्षणं तदासीत् ॥

...यथास्य मांसं गलितं जलेन क्रमेण जातं विपरीतगन्धम् ।
निरीक्ष्य नास्या विचचाल चित्तं प्रेमाधिकं तत्र वरं प्रतीतम् ॥

शवगन्धं समाघ्राय मक्षिकामशकादयः ।
विशन्तिस्मानिशन्तत्र यत्नेनापि निवारिताः ॥
कीटाकुलितसर्व्वाङ्गं चेजीर्णं गलितामिषम् ।
दृष्ट्वा रुदन्त्युवाचेदं तस्य तत् सुन्दरं वपुः ॥

...न्तः कृतान्तानुगतोनुमन्ये कथं स जीवेदिति संशयो मे ।
...नश्च चिन्ता मनसीति जाता मृषा भवेत् किं ननु दैववाणी ॥
सा चिन्तयन्ती पवनस्य वेगात् क्षणेन देशान्तरमभ्यगच्छत् ।
...तः क्रमेणाभिनवं प्रदेशमागत्य साध्वी सभयं ददर्श ॥
...यङ्करो नीलनिभस्तदानीं शास्थोऽक्षगस्तत्र समागतोऽभूत् ।
...ीला पयोऽसौ शवगन्धमुग्धः शवं समुद्दिश्य जलं पपात ॥

आगच्छन्तं तमालोक्य क्रोधेनाभिशशाप सा ।
रे दुष्ट सारमेय त्वं कुम्भीरेण हतो भव ॥
तस्याः शापप्रभावेण कुक्कुरो घूर्णितो जले ।
कुम्भीलेन धृतः पादे खादितस्तत्क्षणादसौ ॥
दृष्ट्वा स्वसम्मुखी बाला ततो निष्क्रम्य प्रस्थिता ।
कियद् दूरं समागत्य दानघट्टं समासदत् ॥
पारावारीणलोकानां नदीतरणसम्भवम् ।
दानमादीयते यत्र दानघट्टः स उच्यते ॥
दानग्राही शवं तत्र दृष्ट्वा तामित्यभाषत ।
शवं त्यक्त्वा समुत्थाय तीरमागच्छ सुन्दरि ॥
स्वभावाकारभावेण स्वैरिणीव विभाव्यसे ।
विषमे दानघट्टेऽस्मिन् किं दानं दातुमिच्छसि ॥

पुनर्विज्ञातुमिच्छामि कस्ते क्रोडेऽभिवर्त्तते ।
क्षपोद्यं नापि मेवार्यं तथंत्र यथा निगद्यताम् ॥
श्रूयतामबले वाक्यं क्रियतां करुणा मयि ।
नोपहासस्य योग्याहं वेङ्कलोवाच तं ततः ॥
न मे दुःखपरिज्ञाने वर्त्तते ते प्रयोजनम् ।
इत्युक्तस्तां पणग्राही व्याजहार सकौतुकम् ॥
परमा सुन्दरी त्वं हि यादृशी नवयौवना ।
सर्व्वं ते कपटं वाक्यं मन्ये यदभिभाषसे ॥
सङ्गृह्य रत्नानि बहूनि शङ्के निःसृत्य गेहादिव गन्तुकामा ।
कस्मै पुनर्भाग्यवते प्रदातुं क्व प्रस्थितासीति वचोभिधत्स्व ॥
तत्र स्थितः कश्चिदिदं बभाषे भ्रम्येन गत्वा ह्यसतीं गृहाण ।
प्रस्थातुमेषा न यथा समर्था कार्य्यन्तथा तूर्णमिदं मतं मे ॥
एवं निगदिता रामा भयकम्पितविग्रहा ।
सङ्क्षिप्तवचनेनैनं ददौ परिचयं ततः ॥
पञ्चमासमितं जीर्णं नाथस्य मे मृतं वपुः ।
नयामि मनसादेवीं पुनर्जीवनकाङ्क्षया ॥
एकमासं पुनर्यामि तस्या देव्याः कृपावधि ।
ललाटे लिखितं धात्रा कोऽन्यथा कर्त्तुमर्हति ॥
तद्वाक्यकौशलेनासौ करग्राही ततोऽब्रवीत् ।
त्वं साध्वि स्वेच्छया गच्छ विना दानं विना भयम् ॥
ततः सा निर्भयाऽवोचन्मङ्गलं बोभवीतु ते ।
इत्येवाशिषमाख्याय भेलया सत्वरं ययौ ॥
सुदूरं तत्प्लवे याते तां विलोक्य शृगालिकाः ।
तीरमासाद्य तामूचुः शवगन्धहृतात्मनः ॥

एका नारी शवं नीत्वा कथं गच्छसि भेलया ।
किन्ते मृत्युभयं नास्ति स्रोतसा मज्जितुं जले ॥
स्वल्पबुद्धितया बोद्धुं न शक्नोषि हिताहितम् ।
हातुमिच्छसि किं बाले जीवनं धर्म्मरक्षणाम् ॥
सप्तरात्रं निराहाराद् बुभुक्षाकातरा वयम् ।
जीवयास्मान् शवं दत्त्वा रक्ष धर्म्मञ्च जीवनम् ॥
इत्युक्ता बेहुलाऽवादीत् किं ब्रूत कठिनं वचः ।
नार्पयामि शवं धूर्त्तास्तं जीवयितुमुत्सहे ॥
दुराशा नापि वः सिध्येत् प्रतियाताधुना वनं ।
जीवयिष्यामि मे नाथं सत्यमेतद् दृढ़ब्रतं ॥
अचुर्श्चीहसन्त्यस्ताः श्रुत्वेत्यं बेहुलावचः ।
अपूर्व्वं भाषसे बाले किं तवाशा फलप्रदा ॥
किं जल्पसि मृषा वादं यच्छैतन्नो मृतं वपुः ।
वयं त्यक्ता वनं यामो लब्धपुण्या सुखं व्रज ॥
आकर्ण्य तासां वचनं प्रतस्थे रामा सुदूरं कदलीप्लवेन ।
गम्भीरताशा अपि ताः शृगाल्यः पुनः पुनस्तामवलोकयन्त्यः ॥
अश्रुप्रधौतसिन्दूरं भालं दृष्ट्वा निराशया ।
वदन्ती चिन्तयन्ती च सा सखेदमगात्ततः ॥
तथाच क्रमशो गच्छन् वोदालहृदमागतः ।
महान्तो जन्तवो यत्र तस्थुरावर्त्तवर्त्तिनः ॥
तरङ्गघूर्णीगतयादसां गणा मुहुर्निमग्नाश्च पुनःसमुत्थिताः ।
भयङ्कराकारमुखा महोदरा वदालमीना अपि तत्र वीक्षिताः ॥
कर्म्मकारस्य भस्त्रेव वक्त्रं येषां हृदन्तरम् ।
मांसाशी राघवो नाम तेषामेकतमो महान् ॥

शवगन्धसमाहृतस्तत्रासौ समुपस्थितः ॥
सवेगं शवमाक्रम्य तस्य जान्वस्थि भुक्तवान् ॥
आस्वादमासाद्य सलोभचित्तं मीनं समग्रं प्रतिभोक्तुकामम् ।
बलाद् गृहीतुं शवमुत्सुकञ्च न कोपि तं वारयितुं समर्थः ॥
यत्नेन तं ताड़यतिस्म वेङ्गला शवं समाच्छाद्य निजेन वाससा ।
रुषा स्वयं सा निजगाद राघवं रे कालबोदाल कुतश्चिदागतः ॥
नाथस्य जान्वस्थि गिलन् पलायितुं
नचार्हसि त्वं म्रियसे च तत्क्षणात् ।
देव्याज्ञया धीवरजालयन्त्रित
स्त्वं जाल्म मे हस्ततले पतिष्यसि ॥
त्यक्त्वा शवं दूरतरं प्रयाते वोदालमीने तरसा तदानीम् ।
भेलोपि तस्याः पवनस्य वेगादुपेतवान् ग्रासनकाटिघट्टम् ॥
तं घट्टं पृष्ठतः कृत्वा भेलोसौ समुपस्थितः ।
नारिकेलसमायुक्त डाङ्गासंज्ञं नदीतटम् ॥
प्रत्यक्षं लक्ष्यते यत्र स्रोत ऊर्द्ध्वं प्रवर्त्तितम् ।
तत्रासीन्मृण्मयी मूर्त्तिर्मनसायाः प्रतिष्ठिता ॥
तत्र तां पूजयामास प्रतिमां प्रतिभान्विताम् ।
वरं ययाचे तां देवीं देहि मे पतिजीवनम् ॥
तस्या वाक्येन सन्तुष्टा सती देवी हरात्मजा ।
शशंस मनसा शीघ्रं कल्याणं तेऽस्तु वेङ्गले ॥
ततो वैद्यपुरं रामा यदासौ समुपागता ।
तदानीमागतः स्नातुं तत्रैको वैद्यनन्दनः ॥
स तस्या रूपमालोक्य सर्व्वकार्य्यबहिष्कृतः ।
हतबुद्धिर्बभाषेदं क्व प्रयासि वराङ्गने ॥

फणिना ते मृतः स्वामी न कुर्य्याः साध्वसं ततः ।
यस्यास्थिपञ्जरस्तिष्ठेत् सञ्जीवति न संशयः ॥

मन्त्रौषधं मे मृतजीवनाख्यं जीर्णोऽपि सञ्जीवति तेन सद्यः ।
कुरङ्गनेत्रे भव सुस्थचित्ता कान्तः पुनर्जीवति ते न शङ्का ॥
पूर्व्वं त्वमङ्गीकुरु मे कृशाङ्गि यद्दीयमानं प्रतिदानमस्य ।
स्वान्तं तदा मे भवति प्रशान्तं दिनत्रयञ्चैदिह यापयेस्त्वम् ॥

तदुक्त्या कुपितावोचद्रे वैद्यकुलपांशुल ।
पांशुः पततु ते वक्त्रे त्वं पशोरधमो धिया ॥

त्यक्त्वा वैद्यपुरं जगाम मनसा चिन्तापरा वेङ्गला
नाम्ना पीरतलीं ततो नरपुरं तत्रैव भागीरथीं ।
दृष्ट्वा हर्षयुता तदीयसलिले स्नात्वा पवित्राऽभव-
त्तन्नीरेण पुनः सती स्नानवती पूतञ्च धौतं पतिम् ॥

विषेण जीर्णं दुरितं जलेन यथास्थि मांसञ्च तथैव जातम् ।
दृष्ट्वा तयोक्तं किमनो हि धीरा भयङ्करं सर्पविषं वदन्ति ॥
तत्रागता सा दिवसत्रयेण यत्रास्ति धारा त्रिविधा नदीनाम् ।
सा मुक्तवेणी कथिता त्रिवेणी तत्पुण्यतीर्थं विदितं जनानाम् ॥
षण्मासकालं क्रमशो व्यतीत्य शवेन पत्या सहसा समेत्य ।
प्लवेन रम्भातरुसम्भवेन गङ्गामुपातिष्ठत यत्र नेता ॥
यातोऽथेन स्रोतसा तत्प्लवोऽपि मन्दं मन्दं तीरमासाद्य लग्नः ।
तत्रोत्तीर्णा जाह्नवीतीरनीरे स्नात्वा चासौ वेङ्गलाऽभूत्पवित्रा ॥

त्रिवेणीघट्टमागत्य ददृशे रजको तया ।
धावन्ती देवकन्यापि नेता भागीरथीजले ॥

इति श्रीभगवच्चन्द्रविशारदप्रणीते वेङ्गलानन्दिमन्दरे वेङ्गया वेङ्गला-
त्रिवेणीदर्शनं नाम चतुर्थी चतुर्दशला ॥

# वेहुलानखिन्दरम् ।

## पञ्चमसङ्कल्पना ।

अथ तत्सलिले नेता देववस्त्राणि प्रत्यहम् ।
धावते कीलसंयुक्ते फलके स्वर्णनिर्म्मिते ॥

देवीं ततोऽभ्यर्च्च्य निमीलिताक्षी ध्यात्वा पुनस्तां सहसा ददर्श ।
नेतासुतः कोपि तदेत्य तत्र चकार तां व्याकुलचित्तवृत्तिम् ॥

गच्छ द्रुतं सद्म सुतेति वाणीं श्रुत्वापि सोयं न गृहं प्रयातः ।
नेता तदा क्रोधवशाच्चपेटाघातेन चक्रे गतजीवनं तम् ॥

पुत्रं मृतं भूपतितं विलोक्य सा सुस्थचित्ता रजकी बभूव ।
धृत्वा सुराणां वसनानि पश्चाद्रौद्रेण शुष्काणि ततश्चकार ॥

समधिकचपला साऽऽलोक्य वेलावसानं
समुचितसमयोऽयं वस्त्रदाने निरूप्य ।
करतलपरिघाताज्जीवयित्वा गतासुं
सुतममरपुरेऽसौ गन्तुकामा तदासीत् ॥

मृतं सुतं जीवितमाशु कृत्वा नेता ततो देवसमाजमेत्य ।
प्रदाय सर्व्वं वसनं सुधौतमादाय तेभ्यो मलिनं प्रतस्थे ॥

गत्वा गृहं स्वीयमुवास रात्रावुत्थाय नीत्वा शिरसांऽशुकानि ।
नेता प्रभाते सहसा जगाम तीरे त्रिवेण्याः सरितः सुराणां ॥

अध्यास्य रात्रावथ तत्तटान्तं ध्यात्वा पुनस्तन्मनसापदाब्जम् ।
विलोक्य नेताकृतकार्य्यमत्र तद्वृत्तकृत्ता चिन्तयतिस्म चित्ते ॥

मारयित्वा सुतं या स्त्री पुनर्जीवयितुं क्षमा ।
न भवेन्मानुषीमर्त्त्यैरेषादेवीति निश्चयः ॥
अतोऽस्याश्चरणौ धृत्वा पतित्वा धरणीतले ।
सर्व्वं निवेदयाम्यस्यै दैवदुर्घटनं मम ॥
इयमर्हति वक्तुं मे प्रतीकाराय साधनं ।
पुनः पूरयितुं मन्ये समर्था मन्मनोरथम् ॥
विचिन्त्य शवमास्थाप्य यत्र सा रजकी स्थिता ।
वेङ्कला तत्र सङ्गम्य तत्पादे पतिताऽभवत् ॥
परमा सुन्दरी बाले त्वं रूपयौवनान्विता ।
पतितासि कथं पादे नेता तामित्यभाषत ॥
उत्तिष्ठोत्तिष्ठ रे वत्से मा गृहाण पदं मम ।
मा रोदीर्ब्रूहि मे तथ्यं शोकस्ते किन्निबन्धनः ॥
नेता निवारयामास यावत् पादावलम्बनं ।
चरणे कुन्तलं न्यस्य दधौ सा तां ततो दृढम् ॥
करेणोत्थाप्यमाना सा रोरुदन्ती ततोऽवदत् ।
अकथ्यमानं सन्तापं निबोध त्वां निवेदये ॥
नाम मे वेङ्कला यस्याः पिता सायो वणिक्पतिः ।
विवाहरजनीशेषे फणिना च हतः पतिः ॥
षण्मासं तच्छवं नीत्वा परिभ्रम्य नदीजले ।
अद्य ते दर्शनं लब्ध्वा मन्ये मे सफलः श्रमः ॥
त्वत्प्रसादबलेनाहं जीवयिष्यामि मे पतिम् ।
तत्र मे संशयो नास्ति करुणात्र विधीयताम् ॥
त्वं मे मातृष्वसा नेते आताद्यावधि निश्चयः ।
यद्यनुमन्यसे माता रक्षामि वसनानि ते ॥

वस्त्ररागानुरागे मे प्रवृत्तिः शैशवावधि ।
विद्यते तेन जानेऽहं रञ्जितुं वस्त्रमुत्तमम् ॥

मातस्त्वं यदि जातासि मम दर्शनगोचरा ।
बहुपुण्यफलेनाद्य प्रार्थनं सफलं कुरु ॥

कान्तो ममायमपि जीवति येन मात-
र्याचे तथा सविनयं कुरु पुण्यशीले ।
त्वत्पादपङ्कजवरं हि निवेदयामि
धावामि वस्त्रमखिलं प्रतिशोधितवास्मि ॥

एवं निवेदिता नेता तामभाषत वेङ्कले ।
पादस्पर्शेन मे वत्से किन्ते लभ्यं भविष्यति ॥

जात्याहं रजकी चीना मत्पादस्याभिवन्दनम् ।
नोचितं ते तथा नापि मदर्थं वस्त्रधावनम् ॥

रथ्याणि देववसानि स्वयं गृहीत्वा
कृत्वा पुनश्च पवित्राणि ददामि सायम् ।
धौतानि चेन्नहि भवन्ति तथा भवत्या
देवाः शपन्ति सहसा कुपिता भवन्तः ॥

देवाः पुनश्च यदि रोषपरा भवन्ति
नाशालता फलति मे निहता वरं स्यात् ।
शङ्के भवेत् प्रतिहतं कुशलं चिराय
लाभः परं भवति ते विपरीत एव ॥

वेङ्कलोवाच मातस्त्वं वस्त्रमेकं प्रदेहि मे ।
मया धौतं समालोक्य ततः कुर्या यथारुचि ॥

इत्युक्त्वा रुदतीं बालां पादाग्रे पतितां भुवि ।
दृष्ट्वा करुणया नेता ददौ वस्त्रमेककम् ॥

त्रिवेणीसर्वदीघट्टे वेङ्कला नेतया सह ।
सुवर्णफलके वस्त्रं धौतं चक्रे सुरञ्जितम् ॥
दृष्ट्वा तुष्टा सती नेता भागं ज्ञात्वा च वाससाम् ।
अर्द्धं रञ्जयितुं तस्याः प्रददौ तदनन्तरम् ॥
क्षारेण नेता वसनं ररञ्ज जातं तदा राजतशुभ्रकान्तम् ।
तद् वेङ्कलायाः परमं सुशोभं सूर्य्यप्रभं केवलवारिधौतम् ॥
वेङ्कलानेतयोर्वस्त्रं रौद्रशुष्कं यदाऽभवत् ।
वेङ्कलावसनं तत्र जयतिस्म तदुज्ज्वलम् ॥
धौतानि तानि वसनानि मुदा गृहीत्वा
वेलावशानमवलोक्य समीक्षमाना ।
तां वेङ्कलां पतिवियोगजदुःखभाजं
नीत्वा च साऽमरपुरं प्रजगाम नेता ॥
उपायं चिन्तयन्ती सा तत्र संगोप्य वेङ्कलाम् ।
वसनानि समादाय देवसंसद्युपस्थिता ॥
यत्राभवन् समासीना ब्रह्मविष्णुमहेश्वराः ।
अन्येपि च महेन्द्राद्यास्तत्र वस्त्राणि सा ददौ ॥
वेङ्कलाधौतवस्त्राणि सुदीप्तानि विशेषतः ।
विलोक्य रजकीमूचे सम्प्रहर्षं त्रिलोचनः ॥
एतावत्कालमस्माकं वसनं रज्यते त्वया ।
नेदृशं दृश्यते नेते कदापि स्वच्छमुज्ज्वलम् ॥
नेता निवेदयामास देवदेवं कृताञ्जलिः ।
मह्यं क्षमाणताद्यैव देवेश मत्स्वसुः सुता ॥
सा बाला कथ्यणीतेषु शिल्पकार्य्येषु तत्परा ।
मतकृते कृति वस्त्राणि ...

एवं निवेदितो देवस्तामुवाच वृषध्वजः।
कदाचिन्न श्रुतास्माभिर्न दृष्टा ते स्वसुः सुता॥
सा मे नप्त्री भवेत्त्वेते द्रष्टुमिच्छामि तामहम्।
श्रुत्वेति तत्क्षणान्नेता वेङ्कलां प्रत्यभाषत॥
आदिष्टास्मि महेशेन त्वां नेतुं देवसंसदि।
वेङ्कले तत्र गन्तव्यं सावधानतया त्वया॥

त्वञ्चेत् सुरान् तोषयितुं समर्था नाथ्यप्रियान् नर्त्तनगीतवाद्यैः।
तदा तवाशा फलिनीति मन्ये तत्र प्रयत्नं कुरु सानुरागम्॥
नृत्ये गीते सर्व्वशिल्पेऽसि दक्षा ज्ञातं तत्ते भावसन्दर्शनेन।
कर्त्तेणातस्त्वं मृदङ्गं गृहाण वीणायन्त्रं नूपुरं ते करेण॥
इत्युक्त्वा तां दर्शयामास नेता यन्त्राण्येशा यत्र संस्थापितानि।
श्रुत्वा सर्व्वं सम्मता वेङ्कला सा याता प्रीता नेतया नीयमाना॥

अमरपुरमगच्छद्वेङ्कला नर्त्तकी सा
सुरपरिषदि बाला नृत्यगीतानुरागा।
द्रुतपदपदपातैर्मोहयामास नृत्यै-
रमरपुरनिवासान् देवदेवीसमूहान्॥

मृदङ्गवाद्यं मधुरं सनूपुरं समन्दिरं तद्ध्वनितं हि सुन्दरम्।
परं प्रमत्ता शिखिनीव नर्त्तनं चकार गीतञ्च यथा पिकस्वरं॥
तयैकया नर्त्तमगायनं कृतं न तालभङ्गः क्वचिदप्यजायत।
शिरोग्रवासोञ्चलगूढमाननं स्मितेन युक्तं सबनं प्रदर्शितम्॥
वादित्रयन्त्रं खदिरक्रुजातं शब्दायितं ताथयिताथयीति।
माधुर्य्यमिस्तानमयं तदेव स्वान्तं न कस्यापि चकार मुग्धम्॥

उत्तिष्ठतेस्म सहसोपविवेश नित्यं
नृत्यं चकार करतालरवावयुक्तं।

सा ऽमोदयन्मधुरकिङ्किणिनिस्वनेन
तौर्य्यत्रिकेण मिलितेन महेश्वराद्यान् ॥
मुहुर्घूर्णितसर्व्वाङ्गं पादनिक्षेपभङ्गिमत्।
नूपुरध्वनिना युक्तं कं न नृत्यममोहयत् ॥
पञ्चमादिकनिस्वानं गीतं धैवतसुस्वरम्।
गायतिस्म यदा रामा कं न मुग्धं चकार सा ॥
नेता तत्रैकपार्श्वस्था दृष्ट्वा सर्व्वं सुलक्षणाम्।
साधुवादं चकारोच्चैर्हर्षातिशयतत्परा ॥

धीरातिधीराङ्घ्रितलप्रचारान्मरालगत्याप्रियदर्शनायाः।
तस्याः सुधांशुप्रतिकाशमाना प्रमोदयामास न कं सुखश्रीः ॥
हृद्येन गीतेन सुरागरङ्गैस्त्रिभङ्गभङ्ग्या च तदङ्गनायाः।
कण्ठस्वरेणाहतवाक्प्रभावान्मुग्धा बभूवुः सुरलोकलोकाः।
निरीक्ष्य शिक्षानिपुणत्वमस्याः सन्तुष्टचित्तो गिरिशोऽथपृच्छत्।
बाले वदास्मान् कथमागतासि का त्वं किमेका क्व च ते निवासः ॥
मातुः स्वसा ते कथमस्ति नेता सर्व्वं विशेषं परिचाययस्व।
वयं हि देवाः परितोषमाप्ता मनोरथं शंस भयं न कुर्य्याः ॥

देवाज्ञया सपदि नर्त्तनगीतवाद्ये
भङ्गं ददौ सुरगणान् प्रतिवक्तुकामा।
रामा मनोगतमियं मनसा विचार्य्य
पूर्व्वापरं परिचयं मनसा विचिन्त्य ॥

कृताञ्जलिर्देवगणान् प्रणम्य सा नर्त्तकी वाचमुवाच बाला।
स्वर्गापवर्गादिषु देववर्गा आराध्य यूयं जगतां जनानाम् ॥

प्रभवत यदि यूयं हृष्टचित्ता नितान्त-
मनुमतनटनं मे धौतवासश्च दत्त।

न भवति यदि बाधा देववर्गाः समग्रा
अनुगतजनवाक्ये कर्णपातं कुरुध्वम् ॥
श्रुतममरपुरेऽस्मिन् देवसङ्घा वसन्ति
सकरुणहृदयास्ते पालयन्ते जगन्ति ।
त्रिभुवनहितहेतो रूपभेदं धरन्ति
निखिलदुरितभाजां दुर्गतिं नाशयन्ति ॥
कलुषहरवराद्या जीविनस्तारयन्ति
निजगुणपरितोषा वीतरोषा भवन्ति ।
भवजलनिधिभीतिं त्रासितानां हरन्ति
श्रुतिविहितमितीदं साधवः संवदन्ति ॥

यन्नाममात्रेण तरन्ति जीवाः सिद्धाभिलाषाश्च भवन्ति कार्ये ।
पश्यन्ति ये तच्चरणारविन्दं तेषामलभ्यं भुवि नास्ति किञ्चित् ॥
सृष्टिःस्थितिर्वा प्रलयोऽपि येषां वाञ्छावतः सम्भवति क्षणेन ।
तेषां न चास्तीह किमप्यसाध्यं मृतं पुनर्जीवयितुञ्च मर्त्यम् ॥

अतोऽस्मि पतिता युष्मत्पादपद्मतले सुराः ।
कुरुध्वं मयि कारुण्यं करुणामयविग्रहाः ॥
पुनर्बद्धाञ्जलिर्धीरा गलदश्रूक्षिताम्बरा ।
वेङ्कला वक्तुमारेभे स्वीयं परिचयं ततः ॥
निम्बानिनगरावासी सायदत्तः पिता मम ।
श्वशुरश्चम्पकाधीशश्चन्द्रहासो वणिक्पतिः ॥
लखिन्दरः सुतस्तस्य विद्याबुद्धिगुणान्वितः ।
सोऽयं परिग्रहीता मे पिता दाता विधानतः ॥
श्वशुरस्य विवादेन देव्या कुपितयेरिता ।
विवाहरजनीभागे काली हतवती पतिम् ॥

एवं नीत्वा शवेनाहं मृतस्य जीवनाशया ।
षण्मासांश्च परिभ्रम्य त्रिवेणीतीरमागता ॥
तत्र दृष्टा मया नेता वस्त्रं धावितुमागता ।
अथान्तं सुतमाहत्य सार्धं जीवितमाकरोत् ॥
तस्याश्चरित्रमालोक्य जाताहं विस्मयान्विता ।
तत्पादे पतितोवाच त्वं मे मातृष्वसा भव ॥
दीयतां देवता वस्त्रं क्रियतां परिचारिका ।
नीयतां बेहुलादासी नीयतां देवसंसदि ॥
ततो मे कृपया नेता वस्त्रं रञ्जयितुं ददौ ।
तन्मया धौतमालोक्य प्रसन्नहृदयाभवत् ॥
मामानीय ततो नेताऽमरसंसद्युपस्थिता ।
तत्कृपाबलमाश्रित्याऽपश्यं देवपदाम्बुजम् ॥
मन्ये प्राक्तनपुण्येन सर्वमेतत् सुसङ्गतम् ।
दयावन्तोऽधुना देवा यूयं कुरुत मङ्गलम् ॥
कृताञ्जलिरहं याचे युष्माकं शरणं गता ।
येन जीवति मे नाथस्तत्प्रसादो विधीयताम् ॥

निशम्य देवेन वृषध्वजेन प्रत्युक्तमस्यै सुरसंसदीदम् ।
वादेन जाता मनसाभिरुष्टा नान्योऽस्ति यत्नः प्रतिकर्तुमस्य ॥
नाहं समर्थो न च देववर्गो दातुं प्रसादं किमुतामयं वा ।
नान्योऽभ्युपायोऽस्ति विना तयैव त्वं गच्छ देवीं परितोषयस्व ॥
श्रुत्वा वचस्तस्य महेश्वरस्य प्रोचुस्तदा देवगणाः प्रसन्नाः ।
प्रयाहि नेते मनसां नयस्व वाञ्छाभिलाषं परिपूरयस्व ॥
नां देवतानां वचसा निवेद्य त्वामाह्वयन्ते विधिकेशवादयः ।
आगच्छ तूर्णं [illegible] पूजाप्रचाराय [illegible] ॥

देवैरुक्ता सती नेता सत्वरं मनसालये ।
जगाम मनसां देवीं देवतानां निदेशतः ॥
तुल्योऽमरपुरस्यैव दृश्यते मनसालयः ।
तत्रासौ नागमातासीदासीना निर्ज्जनालये ॥
तत्रोपस्थाय तां नेता युक्तपाणिर्न्यवेदयत् ।
देवास्त्वामाह्वयन्तीति द्रुतं गच्छ तदालयम् ॥
ज्ञात्वा तन्मर्म्म सावादीत्तत्र किं मे प्रयोजनम् ।
श्रुत्वा सविनयं नेता ततस्तामित्यभाषत ॥
एका बाला समागत्य देवेशि देवतासभाम् ।
तोषयामास नृत्येन गीतेन देवतागणान् ॥
कासौ रामा मानवी वाप्सरो वा नाहं जाने किन्नरी नर्त्तकी वा ।
देवादेशात्तत्र गत्वा सभायां जानीषे त्वं कीदृशी सा कुमारी ॥
वेङ्कलामिति तां मत्वा प्रत्युवाच मनस्विनी ।
सभायां न गमिष्यामि नास्ति किञ्चित्प्रयोजनम् ॥
श्रुत्वा तद्वचनं नेता रजकी वदती ततः ।
निवेदयामास देवि गन्तुमर्हसि साम्प्रतम् ॥
पूजाप्रचारणं तेन भविता तेऽवनीतले ।
इत्यूचुर्देवदेवाद्याः सत्वरं देवि गम्यतां ॥
नेता प्रिया सखी देव्या ताञ्चोवाच प्रियं वचः ।
प्रत्याख्यानं ततस्तस्या न देवी कर्त्तुमर्हति ॥
अथ सा मनसा शीघ्रं जगाम देवतासभाम् ।
देवास्तामागतां दृष्ट्वा सादरेण न्यवेशयन् ॥
सिंहासनोपविष्टाया देव्याः पादतले तदा ।
पतिता वेङ्कलोवाच मयि मातर्दयां कुरु ॥

षण्मासान् भवमाश्रित्य परिभ्रम्य महीजले ।
कृपाबलेन ते मातः प्राप्तास्मि त्वत्पदाम्बुजम् ॥
विलोक्य बेहुलां तत्र देवी जाता नतानना ।
सुराः सर्व्वे हसन्तिस्म दृष्ट्वा तां नतमस्तकाम् ॥
ततस्तां त्र्यम्बकोऽपृच्छत् मनसे किञ्चिदन्धनः ।
चन्द्रेण सह ते वादो ब्रूहि मां ज्ञातुमुत्सुकम् ॥
विवाहयामिनीशेषे हतः किं बेहुलापतिः ।
त्वयैव दारुणः शोकस्तस्यै दातुं न युज्यते ॥
को भवेत् सदयस्तस्मिन् यस्य वादस्त्वया सह ।
त्वमेव सरला भूत्वा जीवयस्व नखिन्दरम् ॥
पूजा प्रचारिता तेन भविता ते महीतले ।
प्रसन्ना भव मातेव कोपं मुञ्च दयां कुरु ॥
इत्युक्ता देवदेवेन व्यपदेशसमाश्रिता ।
मनसा प्रत्युवाचेदं क्षामेवं भाषसे कथम् ॥
न जायते स्मृतौ देव कश्चन्द्रः का च बेहुला ।
विवादो वास्ति मे केन मया तन्नोपलभ्यते ॥
श्रुत्वा तद्बेहुला वादीन्न मातः कपटं कुरु ।
काली त्वत्प्रेरिता कान्तं जघान निशि निद्रितम् ॥
त्वयस्त्वत्प्रेरिता नागा निवद्धाः क्रमशो मया ।
ततो निद्राभिभूतायां मयि कालीरिता त्वया ॥
नागीयं नाथमाहत्य यदा प्रस्थातुमुद्यता ।
द्रुतमुत्थितया दृष्टा छिन्नपुच्छीकृता मया ॥
सर्पास्ते पेटिकामध्ये छिन्नपुच्छं ममाञ्चले ।
इत्युक्त्वा दर्शयामास फणिनो बेहुला सुरान् ॥

वेङ्कले भुजगान् दृष्ट्वा संभ्रमो न निवारितः ।
देव्या मनसया का ते किमन्येन हतः पतिः ॥
देवाः कौतुकिनस्तदा सरभसं प्रोचुरिदं तामिति
श्रुत्वा तन्मनसेत्युकाच कथितं दैवैर्मदीयं वचः ।
तां देवीं रुदतीं निवेदितवतीं ज्ञात्वा रुषोक्तिं ततो
मातर्मे कृपयाहूय त्वमधुना सर्पान् समावेशयसि ॥
यस्याः पुच्छमनेनैव छिन्नांशेन लगिष्यति ।
सा मे हतवती नाथं तस्या निष्क्रीयते सुरैः ॥

तस्या वाचा मोदितानां सुराणामादेशोक्त्या नागदेव्या तदानीं ।
आहूतास्तेऽभ्यागतास्तत्र सर्पाः काली नागी केवलं नागताभूत् ॥

दृष्ट्वा तामब्रवीद्बाला मातस्त्वं सरसा भव ।
कालीं नागीं समाहूय नाथं जीवय मेऽधुना ॥
तदाहूताऽऽगता काली छिन्नपुच्छेति कुण्ठिता ।
तत्पुच्छं योजयित्वासौ विबुधानित्यभाषत ॥
कया नाथो हतो देवास्तन्निश्चयत साम्प्रतम् ।
सहसोचुस्तदा देवास्तत् सर्व्वं मनसाकृतम् ॥
ततो न्यवेदयच्चण्डी चण्डमूर्त्तिर्महेश्वरम् ।
अतः किं भाषसे नाथ तव कन्या महासती ॥

विवाहरात्रावियमेव कालिका किमापराधं विधवाऽनया कृता ।
पतिव्रता सर्व्वगुणा प्रियम्वदा या देवतानां परितोषणाहृता ॥
कन्या तवेयं पिशुनस्वभावा पापप्रसक्तानुचरानुरक्ता ।
न वीक्ष्यतेऽस्याः करुणाकणापि देवीषु गण्या हि भवेत् कथं सा ॥
निशम्य देवी कथितं भवान्या तत्रामराणां परिषत्समक्षं ।
लज्जावमानेन भृशं सरोषा साक्षेपयुक्तं वचनं जगाद ॥

सायस्य कन्ये शृणु मे विशेषं करोत्यवज्ञां श्वशुरस्तवायम् ।
काणीतिवाणीमनिशं ब्रवीति छिन्नाक्षदण्डञ्च करे ददाति ॥
शाकं न रक्षति करोति न लोष्ट्रपातं
किं वा तिथिं दशहरां यजते न साधुः * ।
मत्सेविनः शुभफलं गृहिणो लभन्ते
सोयं पुनः कटुगिरात्ववमन्यते माम् ॥
बाधा तस्य ततो मया कुपितया सर्पैर्हताः षट् सुताः
पोताः सप्त निमज्जिता ह्रदजले तत्रापि मां भर्त्सितुम् ।

---

* अत्र व्रतपूजापद्धतिरुच्यते । ज्यैष्ठे मासि सिते पक्षे दशम्यां तिथौ दशहराख्यायां सपत्रांस्नुहीशाखां सिन्दूराक्तां मृत्तिकाभाण्डनिहिताञ्च कृत्वा भूमौ संस्थाप्य तत्समीपभूमावालिम्पनेन नागाष्टकमूर्त्तीः संलिख्य चादौ नागान् पक्व-दुग्धकदलीखण्डेन परिपूज्य ततः स्नुहीशाखाप्रतिष्ठितां मनसां नैवेद्यादिना पुरोहितेनार्च्चयन्ति प्रतिगृहं गृहिण्यः, पुनस्तां पञ्चम्यां पञ्चमीषु चाभिपूजयन्ति पूर्व्ववत् ; ततस्तां जले विसर्ज्जयन्तीति । प्रतिवत्सरमेवं कुर्व्वन्ति गृहिण्यः । अथाषाढे मासि सङ्क्रान्त्यां मनसाख्यायां पञ्चम्यां वा पुनर्देशभेदेन तामुद्दिश्य शाकरक्षणं लोष्ट्रपातमपि कुर्य्युर्गृहिण्यः । तदुच्यते । सिन्दूराक्तं कदलीपत्रं शाकेन पूरितं कृत्वा गृहस्य बहिर्द्वारबहिर्भागे पथि भागत्रयेण संस्थाप्य प्रत्यूषसि प्रतिगृहं गृहिणी नारीजनपरिवृता पुष्पेण मनसां प्रपूज्य भक्त्या प्रणिपत्य च तत्र शाकमुष्टित्रयं संरक्ष्य शङ्खमाध्मापयित्वा प्रतिनिवर्त्तते । पुनस्तत्रैव प्रदेशे दिवसान्तरे विपरीतमुखीं स्थालीं निधाय पुष्पादिना पूजयेत् । ततो लोष्ट्राभिघातेन तां चूर्णयित्वा प्रणम्य च स्वगृहं प्रतियाति नारीति ।

आषाढे मासि सङ्क्रान्त्यां स्नुहीशाखासु यत्नतः ।
आवाह्य पूजयेद्देवीमीश्वरीं योऽहि भक्तितः ॥
पञ्चम्यां मनसाख्यायां देव्यै दद्याच्च यो बलिम् ।
धनवान् पुत्रवांश्चैव कीर्त्तिमान् स भवेद् ध्रुवम् ॥
इति [illegible] ४२ अध्यायः ॥

न श्रान्तो भवतीति दोषवचनस्तेनास्मि दष्टा चिरम्
पुत्रं तस्य लखिन्दरं तव पतिं ज्ञात्वा ददे तत्फलम् ॥
केनोपायेनागतासीत्त्वमत्र जातात्यर्थं त्वत्कृते लज्जिताहम् ।
इत्युक्तासौ कोपकम्पाधरोष्ठा त्यक्त्वा स्थानं गन्तुकामा तदासीत् ॥

सर्व्वे देवाः क्रोधनां तां विलोक्य
प्रोचुः प्रीत्या देवि कोपं जहीहि ।
दोषो नास्या बालिकायाः कदाचि-
ज्ज्ञातः कुर्व्वीत्थं हि चातुर्य्यमस्यत् ॥

वादस्तवायं सह येन जातो विज्ञाय तं पीड़यसे किमन्यम् ।
देवेऽपि कस्ते सुविचार एष एकापराधेन परस्य दण्डः ॥

ततः सविनयं सप्रतिज्ञं बेहुलादेवीमिदमब्रवीत् ।

परिहर जननि त्वं सर्व्वकार्पण्यभावं
तव सपदि सपर्य्यां साधुना कारयिष्ये ।
अहमपि तव दासी जीवयेच्चेत् प्रियं मे
स हि तव परिचर्य्यातत्परः सेवकः स्यात् ॥

तत्र स्थिताः सुरगणाः पुनरूचुरेनां
कोपं विमुञ्च मनसे भव सुस्थचित्ता ।
देवी ततः सुमनसां वचसा सतोषा
तस्यां बभूव सदया पतिजीवनाय ॥

इतिश्रीभगवच्चन्द्रविद्यारदप्रणीते बेहुलालखिन्दरे
सप्तमी सङ्कलना समाप्ता ।

# वेहुलानखिन्दरम् ।

## षष्ठसङ्कल्पना ।

अथाशु निर्म्माय पटेन वेहुलानाम्नी देवी कुणपं तदात्त ।
नखिन्दरं जीवयितुं प्रविष्टा देवास्तु तत्पार्श्वगता बभूवुः ॥
अस्थीनि सर्व्वाणि नखिन्दरस्य देवी गृहीत्वा करपल्लवेन ।
सा योजयित्वा च यथानिवेशं ससर्ज्ज कङ्कालमयं शरीरम् ॥
षण्मासकालेन शवं सुजीर्णं सिक्तं जले मांसविहीनमस्थि ।
तथापि कालीविषमस्ति देहे विषं हि सर्व्वं विषमं तदाङ्गः ॥

अस्थिपुत्तलिकाप्रायं शरीरं गतजीवनम् ।
मन्त्रेण महता देवी निर्विषं कर्त्तुमुद्यता ॥

तन्महामन्त्रोऽत्र सङ्गृह्यते । यथा

शाल्मलीशाखिशाखायां बकराज करोषि किं ।
त्वं हि शुकड़ियावंशः सर्पोदंशस्तु मतृसुते ॥
भुङ्क्ष्व सर्पौ करे दत्वा माघे विषहरी स्वयम् ।
बकस्मरणमात्रेण विषं लोकमधोगतम् ॥
मांसं त्यक्त्वाऽस्थि सङ्गच्छ दूरीभव ततो विष ।
सत्वरं ताड़यिष्यामि मनसा स्वयमागता ॥
विषमाचरते नूनं मयूरो नर्त्तनप्रियः ।
मयूरस्मरणेनाशो गच्छतिस्म विषं ततः ॥

विषसन्निधिमागच्छ नकुलो भाषते स्वयम् ।
हन्तास्मि त्वामहं कालि कालकूटं प्रदेहि मे ॥
गरलं याचते श्रीमं सम्प्रसार्य्य करद्वयम् ।
नकुलस्य प्रभावेण विषं तद्दूरं गतम् ॥
मन्त्रस्य मनसादेव्या पठितस्य प्रभावतः ।
क्षणाज्जलमयं जातं तत् काल्या विषमं विषम् ॥

नखिन्दरं वीतविषं विदित्वा संमन्त्र्य देवी मनसा च मन्त्रम् ।
तं जीवसञ्चारणमन्त्रपूतं सञ्जीवयामास यथास्वरूपम् ॥

ततो निद्रोत्थितप्रायो जीवितोऽभून्नखिन्दरः ।
देव्याश्चोत्सङ्गमाश्रित्य प्रसन्नेन्दुरिवाबभौ ॥
ततो पटम्टकाच्छादमुद्घाट्य मनसाऽवदत् ।
विलोकयत मे वत्सं जीवितं देवतागणाः ॥
ततस्ता देवता दृष्ट्वा हर्षविस्मयमागताः ।
मनसां तोषयामासुः कीर्त्तयित्वा यथोगुणान् ॥

प्राणेश्वरेऽमरपुरेऽमरवृन्दमध्ये
सञ्जीविते मनसया परिहृष्टचित्ता ।
सा वेहुला विधुमुखी प्रणिपत्य देवीं
कृताञ्जलिं सविनयं मनसां बभाषे ॥

अचिन्त्यशक्तिः सुरवन्दितासि मातस्तवार्थं महिमा गरीयान् ।
भणामि ते किं गुणमल्पबुद्धिर्देवा न जानन्ति कुतो मनुष्याः ॥

सत्त्वं रजस्तम इति त्रिगुणात्मिका त्वं
सम्भाषते श्रुतिरिति प्रकृतिः परा त्वम् ।
पृथ्वीजलाग्निमरुदम्बरभूतवृन्दैः
स्वर्गादिकानि भुवनान्यपि ते च कीर्त्तिः ॥

त्वं सिद्धेश्वरि सर्व्वमङ्गलकरी त्वं जीवनिस्तारिणी
त्वं सत्या प्रकृतिः स्वयं त्रिजगतां मातासि चिद्रूपिणी ।
त्वं जानासि विधेरगोचरगुणा मायामयी मोहिनी
त्वं नित्या भुवनेश्वरस्य दुहिता तुष्टाऽभयंदायिनी ॥

ब्रह्मा हरो सुरवरः सुरराजमुख्या
देवा वदन्ति करुणामयि यामनन्ताम् ।
ध्यानावनद्धमनसा परिचिन्त्यमाना
का नाम मोहनमयी तव मूर्त्तिरेषा ॥

त्वत्पादपद्ममकरन्दकणामुपेत्य
जन्मान्तरीणतपसः फलमद्य जातम् ।
मातर्यतो मृतपतिर्मम जीवितोऽयं
साध्वीतिकीर्त्तितगुणा कृपया तवास्मि ॥

षण्मासजीर्णं सलिले शरीरं मांसं विना केवलमस्थिमात्रम् ।
असह्यदुर्गन्धयुतं यदासीत् प्राणा यतो प्राणनिरुद्ध्यमानाः ॥
तदीदृशं ते कृपया शरीरं जातं पुनः सुन्दरकान्तियुक्तम् ।
शरीरमेकन्तु जगत्त्रयस्य दृष्टं न केनापि कदापि मातः ॥
इदं तवाश्चर्य्यमयं हि कार्य्यं यदेव वाचा कथितुं न शक्यम् ।
विलोक्य देवाः कमलायताक्षि ब्रुवन्ति तत् त्वां हि गुणैर्वरिष्ठां ॥
लखिन्दरोऽथो शिरसा नतेन प्रणम्य देवीचरणं जगाद ।
तवैव मातः करुणाबलेन जीवं प्रपेदे गतजीवनोऽहम् ॥

तदा दुन्दुभिनादेन पूरितं दिवस्पुरम् ।
लखिन्दरशिरस्येव पुष्पवृष्टिरजायत ॥
ततोऽसौ बेहुला बाला भूलुण्ठीभक्तिसंयुता ।
नर्त्तितुं सा जिनश्चासादारेभे प्रियदर्शना ॥

समन्दिरमृदङ्गेन ध्वनितस्तालयिध्वनिः।
तथा तत्पादविक्षेपतालेन लक्षितोऽपतत् ॥
प्रोवाच तत्तालसमेन वाचा गीतानुवादेन वराङ्गमीनः।
नाथस्य जान्वस्थि पश्चाद् नद्यां क्षिप्तो न गन्तुं भवतीह नाथः ॥
ततः प्रहृष्टया देव्या प्रेरितो धीवरो जले।
निक्षिप्य प्रजवाज्जालं तं दधावाशु राघवम् ॥
तेनानीतस्य मीनस्योदरं छित्त्वाऽसिना ततः।
नीत्वा जान्वस्थि तद्देवी योजयामास तत्क्षणात् ॥
सर्व्वाङ्गसुन्दरो जातस्ततस्तेन लखिन्दरः।
बेहुलाऽतीवसन्तुष्टा मनसायाः प्रसादतः ॥
पुनर्नर्त्तितुमारेभे नर्त्तिनी नाथसङ्गिनी।
षण्णां साधुसुतानाञ्च पुनर्जीवनकाङ्क्षया ॥
मृदङ्गवाद्येन मधुस्वरेण निनादितेनापि लखिन्दरेण।
आमोहयत्सा मनसां सुरांश्च नृत्येन गीतेन मनोहरेण ॥
या मोहयामास मनः सुराणामेकाकिनी नर्त्तनगीतवाद्यैः।
सा सङ्गता ताण्डवपण्डितेन पत्या न केषां हृदयङ्गमा स्यात् ॥
बेहुलागीतरागेण मनसा मोहिता सती।
वरं वरय भद्रं ते यथेष्टमित्युवाच ताम् ॥
प्रणम्योवाच सा देवीं स्वामिनः षट् सहोदरान्।
जीवयित्वा पुनर्देहि यदि त्वं [illegible]
सुप्रसन्ना सती देवी तां तथास्त्वब्रवीत्तदा।
ततः स्वयं समुत्थाय प्रजवेन जगाम सा ॥
तानुद्धारयितुं यदा [illegible] देवी ययौ सत्वरं
तां दृष्ट्वा तपनात्मजः [illegible] बद्धाञ्जलिः।

देवि त्वं कथमागता मम पुरं तत्कारणं कथ्यतां
देव्यूचे यम नेतुमागतवती साधोर्मृतान् षट् सुतान् ॥
ये खेलन्ति मुदा किशोरवयसः प्रेतास्त्वदीयालये
ते गच्छन्तु वरेण्य मे स्वभवनं संप्राप्तदेहाः पुनः ।
आज्ञां लङ्घयितुं क्षमोऽसि मनसे कस्ते जगन्मण्डले
साधोः षट् तनयान् त्वदाज्ञया वरदे तामित्यवादीद्यमः ॥
आनीय साधोस्तनयान् कृताञ्जलिस्तामब्रवीत् सा सुरसन्निकर्षे ।
भो वेहुले साधुसुतान् त्वदाज्ञया जानीहि किं साधुसुता न वैते ॥
तां वेहुलोवाच विलोकिता मे न स्वामिनैते न मया च देवि ।
ज्ञात्वापि कृत्स्नं भुवनं भवत्या किं रच्यते वाचिकया सहेत्थम् ॥
लब्ध्वाथो पतिसोदरान् कुशलिनी नृत्योद्यता सा पुन-
र्दृष्ट्वा तन्मनसा जगाद सहसा का ते पुनः प्रार्थना ।
सा प्रत्युक्तवती कृताञ्जलिरहं मातर्वरं प्रार्थये
कृत्वा सप्त निमज्जितान् विघटितान् पोतांस्तु तानर्पय ॥
सन्तोषरोषं मनसेत्युवाच तुभ्यं ददे याचितमत्र सर्व्वम् ।
लभस्व पोतान् धनरत्नपूर्णान् सप्ताऽपरान् मुञ्च तथैव सप्त ॥
विरुद्धबुद्धिः श्वशुरस्तवापि तेनैव दुःखम् भुनक्ति सर्व्वम् ।
नेच्छत्यसौ पूजयितुं तथापि त्वमिन्दुवक्त्रे कुरु तद्विधानम् ॥
त्वं यासि यस्मै सुखवञ्चितत्वा दृढेति नोचेत् स भवेत् सुबुद्धिः ।
गर्व्विष्यते माद्य स भक्तिमुक्तस्तदा तु ते किं करणीयमस्ति ॥
इत्युक्ता वेहुलोवाच देवि ते कोऽत्र संशयः ।
जीविताः तनया यस्य न स किं पूजयिष्यति ॥
श्वशुरो यदि ते पूजां [illegible] कथय ।
पयारस्य मम [illegible] ते ॥

यद्द ब्रूते बेहुला देवाश्चन्द्रो मामर्चयिष्यति ।
इत्याशया बद्धचित्ता प्रतीक्षे तमहं पुनः ॥
पूजयेद्यदि मां साधुर्यजेयुर्मानवाश्च माम् ।
देव्युवाच सपर्य्या मे जगत्यां प्रचरिष्यति ॥
त्यक्तरोषा ससन्तोषा मनसा चिन्तिता यदा ।
तदा सा बेहुला बाला प्रफुल्लहृदयाऽभवत् ॥
शशिकान्तमुखी बाला स्वदेशगमनोन्मुखी ।
प्रियेण सह सा गन्तुं त्वरमाणा ततोऽभवत् ॥
परितोषगता वरेण्या सा मनसायाश्चरणौ प्रणम्य च ।
अमरेषु चकारवन्दनमधिरोढुं तरणीं समुद्यता ॥
चतुर्दशसु पोतेषु कर्णधाराश्चतुर्दश ।
युक्ता वाहयितुं नावो बभूवुर्दण्डवाहकाः ॥
तेषामेकतमं पोतं बेहुला च लखिन्दरः ।
आरुह्य रेजतुस्तत्र रोहिणीशशिनाविव ॥
अन्ये षट् साधुपुत्राश्च षट्सङ्ख्यासु तरीषु च ।
विरेजिरे समारूढाः सोल्लासा नायका इमे ॥
अपरे सप्त पोताश्च जातास्तत्सहवर्त्तिनः ।
सर्व्वे चकाशिरे नद्यां पद्मानीव सरोवरे ॥
शुभयात्राप्रसङ्गेन जातः कोलाहलध्वनिः ।
पुनर्वाद्यनिनादेन तदा व्याप्ता दिशो दश ॥
हर्षोल्लासैर्यदा नावो वाहिता नाविकैस्ततः ।
तदा वहोरे इत्युच्चैरूचुस्ते दण्डवाहकाः ॥
यथामरपुरात्तां [illegible]पोतीतीरमागताः ।
[illegible] ज्ञात्वा सर्व्वे सोल्लासिनो गताः ॥

ततो वाह्यतावाधं यूयं वाह्यतानिशम् ।
सोत्साहमब्रुवन्नुच्चैः कर्णधाराः स्ववाहकान् ॥
रात्रिन्दिवमविश्रामं वाह्यमानाः स्ववाहकैः ।
पोताः सत्वरया गत्या ततो वैद्यपुरं ययुः ॥
नारीकेलाख्यछाङ्गायां ततो नाव उपस्थिताः ।
उन्मार्गं वहते यत्र वाहिनीस्रोतसां जलम् ॥
तत्र या स्वर्णमयी मूर्त्तिर्मनसायाः प्रतिष्ठिता ।
तया सा पूजिता देवी चक्रे तस्याः शुभाशिषम् ॥
ततो हासनहाटिञ्च पश्चात्कृत्य क्रमेण सा ।
उपागताऽभवद्यत्र वोदालेनास्थि भक्षितम् ॥
ततो वोदालियानाम्ना तत्स्थानं परिकीर्त्तितम् ।
वगेन महतो नावो वङ्कदूरं ततो ययुः ॥
आदमाख्यपुरं वाला समागत्य ततःपरम् ।
कान्तं सोपद्रितान्तं सकौतुकमवोचत ॥
एत्य गङ्गापुरं रामा वर्द्धमानमलोकयत् ।
तत्र वङ्कानदीं प्राप्य गोविन्दपुरमाययौ ॥
दामोदरमुपागत्य नवखण्डमथागताः ।
आजग्मुर्वेहुलानावो हुवराजपुरं ततः ॥
ददर्श क्रमशो रामा सहर्षं नगरान्तिकम् ।
ततश्चम्पातलं घट्टं तूर्णं सा वेहुलाऽगमत् ॥
ाने स्थाने स्रोतसा रुद्धमार्गा ये विश्लिष्टाः पोतवाहैस्तदानीं ।
ते पोता वाह्यमानाः क्रमेणानीताः सर्व्वे वेहुलायाः सकाशं ॥
षु पोतेषु समागतेषु ते नाविकाः स्वकुलसाधनेन ।
च्य पोतान् किल कीर्त्तयन्तश्चावेश्य यत्तीरसमीपदेशे ॥

क्रमेण भूमाववतीर्य्य रामा न्यवेदयत् सर्व्वमिदं स्वनाथम् ।
त्वां नाथ नीत्वा व्यसनाकुलाऽहं स्रवं यदात्र स्वयमारुरोह ॥
तयो वङ्कद्रव्यपरीतभारं पित्राग्रयानीय सहोदरा मे ।
तदेत्य नेतुं सहसा स्वगेहं वभाषिरे मां मुहुरादरेण ॥
प्रबोधयन्तः प्रतिषेधयन्तः प्रमाणवाचा समुदाहरन्तः ।
तथापि मां नेतुमपारयन्तस्ततो बभूवुर्विफलप्रयत्नाः ॥
विज्ञाय ते मां सुदृढ़प्रतिज्ञामगन्तुकामां सदनं कदापि ।
चम्पातले द्रव्यमधो निधाय गता हताशा गलदश्रुधाराः ॥

षण्मासं विस्मृतं सर्व्वमधुना तत् स्मृतं मया ।
तन्मूलं खनयित्वाद्य प्रेक्षिष्ये विद्यते न वा ॥

अथेत्य चम्पातलभूमिभागमुत्पाटितं तच्च विदार्य्य भूमिम् ।
किञ्चिन्न नष्टं न च पूतिगन्धं लब्धं तया नूतनवत् समस्तम् ॥
स्नात्वा देवीश्चार्चयित्वा निवेद्य सर्व्वानन्यान् स्नानपूतांस्तदन्ते ।
प्रत्येकं सा भोजयामास सर्व्वं किञ्चित् किञ्चिद् द्रव्यजातं विभज्य ॥

स्मृत्वा ततोसौ पितरौ सुदुःखिता
रामा रुदन्ती शुचया तयोस्ततः ।
निवेदयामास पतिं मनोगत-
मिच्छामि पित्रोश्चरणौ निरीक्षितुम् ॥

पित्रोस्तयोश्चरणपङ्कजरेणुजातं
स्पृष्ट्वा त्वयैव सहिता पुनरेमि सद्यः ।
पित्रोः पदं मम मनो न विलोक्य नाथ
पर्य्याकुलं किमधुना वद मे विधेयम् ॥

नखिन्दरस्तां प्रतिभाषतेस्म यदीच्छसि त्वं द्रुतमेतुमद्य ।
भिन्न भिन्न वाभिरपर्व्ववेशं रूपं तदा नौ परिकल्पनीयम् ॥

इत्येवं तौ परिचयभिया दम्पती मन्त्रयित्वा
प्रत्यागन्तुं झटिति भवनं योगिवेशं दधानौ।
नावश्चम्पातरुतलगते तीरघट्टे निधाय
ध्यात्वा देवीचरणकमलं जग्मतुः सायवासम्॥

भिक्षांशुकाशोभितवाङ्कमूला कर्णद्वये दोलितशङ्खमाला।
आरक्तवस्त्रावृतसर्व्वकाया तथापि रामा सुमनोरमासीत्॥

कृत्वा करे काञ्चनभैक्षपात्रमारक्तनेत्रश्च विभूतिगात्रः।
योगीश्वरः शृङ्गधरोऽग्रवर्त्ती ससार योगीश्वरसङ्गिनी सा॥

हर हर इति वाणीर्दम्पती तौ ब्रुवन्तौ
मृदुपदमनुयातौ द्वारमार्गं गृहस्य।
वितर वितर भिक्षां याचमानौ गृहस्थं
सुमधुरशिववादं शृङ्गमावादयन्तौ॥

न बोद्धुं शक्यतेऽस्मासौ योगी वा योगिनी तथा।
निशानिवासिभिर्लोकैर्भूतिमालोक्य मोहितैः॥

अतीव सुन्दरो योगी योगिनी चातिसुन्दरी।
इति मत्वाभिभूतास्ते लोकास्तद्देशवासिनः॥

वराटिकातण्डुलमात्रभिक्षा प्रदानमात्रेण तिरोहिताभूत्।
इष्टेति सर्व्वैश्च तयोः प्रभावो हतप्रबोधैरिव तर्क्यते स्म॥

किं भोजविद्या किमु दैवशक्तिरेतस्य हेतुः किमु कौशलं वा।
न बुध्यतेऽस्मात्र विशेषयत्नात् सुतीक्ष्णबोधैरपि सर्व्वलोकैः॥

तौ दम्पती सायगृहं प्रविष्टौ शिवेति शृङ्गेण मनाग् वादम्।
[illegible]ङ्गस्य नादं भवनान्तरस्था निशम्य गेहादुपागताभूत्॥

भिक्षां प्रदातुं द्रुतमागतां तां श्वश्रूं विदित्वा विमुखो यतीशः।
योगीश्वरी तस्य विलोक्य भावं बभौ तदा सा बधिरस्मितेन॥

सायपत्नी ततो भिक्षां ददौ सा योगिनीकरे।
दत्तमात्रं तिरोभूतं मायया तण्डुलादिकम्॥
योगिनीरूपमालोक्य साऽमला मोहिता सती।
सखेदं तामुवाचेदं सत्यं मे ब्रूहि योगिनि॥

का त्वं क्व वा तिष्ठसि कुत्र यासि वरानने त्वं कुत आगतासि।
त्वं वेङ्कलेव प्रतिभासि चित्ते तच्छोकदग्धं सुतनो मनो मे॥

आवां हि युगलयं मुदा प्रतिदिनं भिक्षावहे तण्डुलान्
दत्तं येन यदेव नौ करुणया तेनोपजीवावहे।
योगी जल्पति केवलं शिवशिवं जल्पाम्यहं तत्तथा
वासो वृक्षतले प्रदोषसमये नान्यद्विजानीवहे॥

श्रुत्वाऽमला तद्रुदतीत्यभाषत निरीक्ष्य ते रूपमिदं मनोहरम्।
अतीव शोकाकुलितं ममान्तरं न सह्यते योगिनि यातनान्तरम्॥
त्वामेव दृष्ट्वा हृदयं विदीर्य्यते सत्यं वचो योगिनि मे त्वयोच्यतां।
त्वं वेङ्कला भासि नखिन्दरः पुनरयं द्वितीयः प्रतिभाति मे मतिः॥

ततस्तां वेङ्कलाऽवादीन्मातर्मे वचनं शृणु।
योगीशस्तव जामाता योगिनी वेङ्कला तव॥
शोकं विमुञ्च माक्रन्द मातस्त्वं सुस्थिरा भव।
जीवयित्वा पुनर्नाथमागताहं तवान्तिकम्॥
तच्छ्रुत्वा रुदतीं रामां रमण्यो विस्मयाकुलाः।
सायस्य सायपुत्रास्ते द्रष्टुं तत्र समागताः॥

ऊचुर्नार्य्यः सर्व्वतथ्यं विदित्वा धन्यासि त्वं वेङ्कले साध्वि बाले।
गत्वा स्वर्गं जीवयित्वा च नाथं प्रत्यायाता यत् पुनर्मर्त्यलोकम्॥

ततोऽमलाऽवदद्बाले चल त्वं निजमन्दिरम्।
सोमाच माधुना मातरामच्छायमे भुवं पुनः॥

मनसाया विवाहेन श्वशुरस्य सुता मृताः ।
तस्या देव्याः प्रसादेन ते पुनर्जीविता मया ॥
न यावत् पूजयेद्देवीं श्वशुरः श्रद्धयान्वितः ।
न प्रवेक्ष्ये गृहे तावद्वध्वाभिरिति निश्चयः ॥

अतः प्रयाणेऽनुमतिं कुरुध्वमिति ब्रुवन्ती पितरौ प्रणम्य ।
सम्भाष्य चान्यानपि लोकवर्गान् प्रत्याययौ सा सह वल्लभेन ॥
तौ दम्पती हर्षयुतौ क्रमेण समागतौ चम्पकवृक्षमूलम् ।
आहूय भृत्येन विचक्ष्य चित्ते सा चित्रकर्म्माणमथादिदेश ॥
भो चित्रकर्म्मन् कुरु लक्षलभ्यं ममाज्ञयैकं व्यजनं विचित्रम् ।
सुवर्णसूत्रै रचितं सुवर्णं मुक्ताकलापेन विराजितान्तम् ॥
स्वतर्कभावेन यथानिदेशं लेख्यं त्वया सर्व्वमिदं सयत्नम् ।
ये साधुपुत्रा भुजगेन दष्टाः सर्व्वे पुनर्जीवनप्राप्तदेहाः ॥
निमग्नपोताः पुनरुद्धृताश्च द्विसप्तसङ्ख्या वसुभिः परीताः ।
समेत्य चम्पातलघट्टलग्नाः स्रोतस्वतीनीरविराजमानाः ॥
लखिन्दरश्चम्पकवृक्षमूलमधिष्ठितो बेहुलया समेतः ।
लेख्यं तथान्यच्च यथा सुरम्यं तन्मे ततः सत्वरमर्पणीयम् ॥

व्यजनं स्वर्णसूत्रेण निर्म्मितं चित्रकर्म्मणा ।
मुक्तारजतयोगेन चन्द्रप्रतिमसुज्ज्वलम् ॥
नीललोहितपीताभैर्मणिभिः खचितं पुनः ।
इन्द्रचापनिभं कान्तं जायते वीजिते सति ॥
कुमुदानाञ्च पद्मानां नानावर्णोपशोभिताः ।
कोरका रचितास्तत्र तारका इव भास्वराः ॥
मकरन्दसुधापानलोलुपास्तत्र शोभिताः ।
गायन्तो मधुपा [illegible] ॥

निर्म्माणकौशलेनैतज्जातमीदृग्मनोरमम्।
सर्व्वाङ्गसुन्दरं तच्च विश्वकर्म्मकृतं यथा॥
स चित्रकर्म्मा व्यजनं प्रणीय प्रदाय तस्मै च ततः सहर्षम्।
न्यवेदयत्तां शृणु सुन्दरि त्वं जातन्तु लक्षाधिकमूल्यमेतत्॥
युष्मत्कृते कृतमिदं व्यजनं प्रयत्ना-
द्दत्तं मया करुणया प्रतिगृह्यतां तत्।
तेनानया मुदितया सपदि प्रदत्तं
लब्ध्वा धनं स भवनं सहसा प्रतस्थे॥
उवाच वेङ्कला नाथं प्रस्थिते चित्रकर्म्मणि।
कर्त्तव्यमधुना नाथ कीदृशं रूपधारणम्॥
परामृश्य ततो जाता वेङ्कला डमकामिनी।
दधाना कुण्डले रम्ये कण्ठे च रौप्यभूषणम्॥
डमरूपधरो नखिन्दरो मनसायाश्चरणप्रसादतः।
परिधेयधटी कटीतटे स विधत्ते तदपि प्रियप्रियम्॥
तरुमूलमुपस्थिता सती व्यजनं चालयति स्म कामिनी।
विधवा वणिजो वधूगणा घटकक्षाः समुपागतास्तदा॥
तत ऊचुरिदं परस्परं रमणी का परिदृश्यतामियम्।
व्यजनं तरुणी करेण किं चतुरा चालयते मुहुर्मुहुः॥
ता रामाः क्रमशो गतास्तरुतलं पप्रच्छुरेनामिदं
विक्रेयं व्यजनं न वा डमवधु व्याचक्ष्व तत् किं पणम्।
साचाहीद्रमणीगणानिति ततो विक्रेयमेतन्मया
लक्षेणैव पणेन निश्चितमिदं नैकोनलक्षेण तत्॥
ताः सर्व्वा विधवास्तयानुविदिताः श्वश्रूस्नुषा यातर-
स्ता नार्य्यो विविदुश्च तां डमवधूं नो वेङ्कलां यातरम्।

तत्तासामवदन् विहस्य चतुरे सत्यन्तु सम्भाव्यतां
विक्रीय व्यजनं त्वया कतिपया मुद्राः स्वयं सञ्चिताः ॥
ऊचे ताः सहसा विहस्य डमजा यूयं महादुर्मुखाः
मन्ये किं विधिना कृताः स्थ विधवा मौर्ख्यदोषेण वः ।
या नार्य्यो गुणबोधिकाः सुरसिका लज्जातिरिक्तं पयः
दित्सन्तीक्षणमात्रतः किमथवा या सप्तपुत्त्रप्रसूः ॥
तच्छ्रुत्वा तदनन्तरं प्रतिवचः प्रोचुर्वधूनां गणा
आगच्छ द्रुतमस्मदीयभवनं श्वश्रूर्गृहे वर्त्तते ।
या रामा सुतसप्तकप्रसविनी सा क्रोष्यतीदं वचा-
हृत्वा मूल्यमिहोचितं भगवती चन्द्रस्य साधोः प्रिया ॥
ततो बभाषे डमकामिनीयं यास्यामि रामा भवदीयगेहे ।
वक्तव्यमेतद्विधवा भवत्यो निकेतने कस्य जलं वहन्ते ॥
इदं वधूनां सरसं सदुत्तरं वयं भवामः सनकात्मजागणाः ।
चम्पाधिपस्य श्वशुरस्य वासे जलं वहामो विधवा यतो वयं ॥
लखिन्दराख्यस्य सुतस्य तस्य षाण्मासिकाख्यं भवितात्र कृत्यम् ।
पानीयमेतद् द्विजभोजनार्थं प्रयोजनीयं भवने तदीये ॥
श्रुत्वा हसन्ती रभसं वदन्ती हिताहितं साधु विचारयन्ती ।
कौनेव ताभिः परिरभ्यमाणा पश्चात् प्रतस्थे व्यजनं दधाना ॥
पूर्णान् घटान् कक्षतले दधानाः क्रमेण नार्य्यो भवनं प्रविष्टाः ।
निधाय तान् भूमितले अमार्त्ताः श्वश्रूं तदोचुर्व्यजनस्य वार्त्ताम् ॥
निर्गत्य मातः कुरु कर्णपातं निवेदयामस्तव पादपद्मम् ।
पूर्व्वमेकं व्यजनं गृहीत्वा डमस्य पत्नी गृहमागतास्ति ॥
गृहान्तरस्था सनका बभाषे तामानयध्वं मम सन्निकर्षे ।
निर्गत्य सा ताश्च ततो विलोक्य पप्रच्छ बाले सविशेषमात्म ॥

डमपत्नी व्यङ्गच्छलेन सनकामिदमूचे। देवि अस्माकं पुत्र एव जानाति निर्म्मातुं मनोरमं चित्रितं व्यजनम्। अहन्तु केवलं तावद्विक्रीणामि गृहे गृहे मातस्तोऽन्यन्न जानामीति।

सनका ततः सर्व्वं निर्णीय तामिदमब्रवीत्

त्वं वेङ्कले परिचयं कथयस्व वत्से
वाक्येन ते शशिमुखि प्रतिभासि चित्ते।
सा वेङ्कला त्वमधुना न विडम्बयस्व
पत्नी डमस्य न पुनर्भवतीदृशीति॥

ततो वेङ्कला श्वश्रूवेदनामसहमाना द्रुतमेव परिचयविशेषं प्रदातुं प्रवृत्ता प्रत्यूचे, श्रूयतां मे सर्व्वं, निवेदयामि ते चरणपङ्कजतलं मातः।

अहं ते वेङ्कला दासी मा क्रन्दीः पुनरीदृशं।
सर्व्वं ते कुशलं जातं पतिर्मे जीवितोऽभवत्॥

सनका, क्व मे दुर्लभो लखिन्दरो वत्से सम्प्रति वर्त्तते।

वेङ्कला, मा कातराभूर्मातरचिरमेव द्रक्ष्यसि ते जीवितसुतस्य मुखं। सम्प्रति लौहगृहं गत्वा द्वारमुद्घाट्य दृश्यतां गृहान्तरे षण्मासनिहितो ज्वलति न वा तैलप्रदीपः। स एव ते भवति प्रमाणं पुत्रस्य पुनर्जीवनस्य।

सनका, अश्रूणि निर्मुच्य सहसा गत्वा व्यग्रचित्ता सती वासरगृहद्वारमुद्घाट्य सविस्मयमपश्यत्। लौहमयेऽपि कुट्टिमतले धान्याङ्कुरो जातः। कणामात्रतैलेनापि ज्वलति प्रदीपो निरन्तरं षण्मासमिति। तदा

ज्वलन्तं दीपमालोक्यात्मानं सोल्लासमानसा।
सा सौभाग्यवतीं मेने मृतपुत्त्रस्य जीवने॥

सा प्रत्यागत्य तामिदमुवाच

सावित्रीव सती वत्से धन्याऽसि जीवनप्रिये।
वेङ्कले दर्शय त्वं मे जीवनं गतजीवनं॥
मनसि मे प्रतिभासि पतिव्रता त्वमसि देवसुतेव न संशयः।
भुवनमोहिनि कामिनि वेङ्कले भुवनमुज्ज्वलितं यशसा तव॥

ततो बेहुला सरोषमिदमुवाच ।

अव्यवस्थितचित्तोऽसौ श्वशुरो मे निरन्तरम् ।
अधीरबुद्धिरुन्मत्तः प्रायशो लक्ष्यते मया ॥
देव्या सह विरोधेन भुक्तं दुःखं यथोचितम् ।
तथाप्यभिलषत्येष किमेवं कलहं पुनः ॥
अतो ब्रवीमि ते मातः श्वशुराय निवेदय ।
स शीघ्रं पूजयेद्येन देव्याश्चरणपङ्कजम् ॥
कोपेन भस्मीकुरुते क्षणेन प्रसादिता या च ददाति सिद्धिम् ।
सन्तोषितायाः कृपयास्मि तस्या जाता कृतार्था बहुसाधनेन ॥
किं हेलया ज्ञातुमिदं हि युक्तं पुत्रादिकं प्राप्य करे समस्तम् ।
न पूजिते तच्चरणारविन्दे नास्माभिरस्मिन् भवने प्रवेश्यम् ॥
पूजिते सति तत्पादे द्रक्ष्यस्येवाचिरं गृहे ।
जीवितान् सप्तपुत्रांस्ते नावश्च द्रविणैर्युताः ॥

सनका वधूवाक्येन त्वरमाणा सती भृत्यमाहूयाज्ञापयत् गच्छ भो भृत्य निवेदय साधुं वधूर्बेहुला समागता सह नखिन्दरेणेति ।
भृत्यो यथाज्ञापयसीत्युक्त्वा धावमानः साधुसमीपमुपसृत्य न्यवेदयत् साधो गृहिणी त्वामाह्वयति निवेदयति च यन्नखिन्दरस्ते बेहुलया जीवितः समागत इति ।
साधुस्तन्निशम्य सहर्षचित्तो झटित्यन्तःपुरमुपस्थित इत्युवाच ।

क्वास्ते मे बेहुला साध्वी कुत्र मे वा नखिन्दरः ।
जीवितो यदि मे पुत्रो देवीं तां पूजयाम्यहम् ॥
तदाकर्ण्य ससन्तोषा बभूवुस्तत्र ये स्थिताः ।
श्वशुरं बेहुलाऽवादीत् शृणु तात निवेदनम् ॥
सोदरैः सह मे नाथं नावश्चापि चतुर्दश ।
द्रष्टुमिच्छसि चेद् देव गच्छ शीघ्रं नदीतटम् ॥

श्रुतार्थोऽयं ततश्चन्द्रः प्रहृष्टस्तरसा ययौ ।
गत्वा दृष्टवान् लोकोऽसौ तरणीस्ता नदीजले ॥
ततः पुत्त्रगणांस्तत्र जीविताम् पुनरागताम् ।
विलोक्योल्लासितः साधुर्ममज्जानन्दसागरे ॥
उपस्थितास्तत्र तदा रमण्यो धन्येति वाक्यं समुदीरयन्त्यः ।
क्व वेहुला पुण्यवती सतीति पुनःपुनस्तां प्रशशंसुरुच्चैः ॥
ऊचुर्लोकाश्चन्द्रदासं विलोक्य चन्द्रेदानीं साधुवृत्तिं लभस्व ।
देव्या सार्द्धं नो विवादं कुरुष्व भक्त्या तस्याः पादपद्मं भजस्व ॥
एवमुक्तस्ततः साधुरुवाचोन्मत्तवत्पुनः ।
अधुनापि प्रतिज्ञेयं श्रूयतां मे मनोगता ॥
विशन्तु नावो भवनं मदीयं पुष्पेन मार्गेण विना जलेन ।
निरीक्ष्य साक्षान्मनसाप्रभावं भक्त्या तदा तामभिपूजयामि ॥
किं दुर्मते पापधियाभिधेहि स्थले न गच्छन्ति कदापि नावः ।
उन्मत्तवद्वाक्यमिदं त्वदीयं सर्व्वे सरोषं विषमं तमूचुः ॥
श्रुत्वा वाक्यं वेहुला तस्य साधोर्ध्यात्वा देवीमब्रवीत्तां प्रणम्य ।
नावो गेहे स्थापयित्वा भुजङ्गैः साधोश्चित्ते भक्तिमाधत्स्व देवि
कृपया ते चरा मातरसाध्यं साधयन्ति हि ।
एतदेव समाधाय महिमानं प्रचारय ॥
निशम्य तत्तस्य यथाभिलाषमाहूय नागान् मनसादिदेश ।
चन्द्रस्य पोतान् भवनं नयध्वं यूयं हि तत् साधयितुं समर्थाः ॥
तदाज्ञया भुजङ्गास्ते बलवन्तश्चतुर्दश ।
भित्त्वः पृष्ठतले कृत्वा पोतान् साधुर्गृहान्तरे ॥
यदा समानीय गृहं भुजङ्गैर्निवेशिताः पोतगणास्तदीयाः ।
विलोक्य साधुः पुलकेन पूर्णा आरब्धवान् पूजयितुं तदैतान ॥

घण्टारवं तत्र सशङ्खनादं श्रुत्वागतास्तत्प्रतिवासिवर्गाः।
वहितपूजां प्रसमीक्ष्य चन्द्रं सर्व्वे तिरस्कर्त्तुमुपारभन्त॥

तां विहायाभिपूज्यन्ते पोताः किं दुर्मतेऽधुना।
किन्ते पूजयितुं देवीं बुद्धिर्नेच्छति पामर॥
विना देवीप्रसादेन चन्द्र ते किं स्वच्छागताः।
सम्भवन्ति स्थले नावो धनपूर्णाश्चतुर्दश॥

एव यस्याः कृपयेदृशं शुभं तस्यां किमीदृक् तव दुर्मतिः शुभा।
विरुद्धबुद्धिर्नशुभङ्करी मता भवेत् सुदुःखाय महीयसामपि॥

साधुपत्नी ततोऽधीरा पुनः शोकभयार्दिता।
प्रबोधयितुमारेभे कुमतिं स्वं पतिं तदा॥

वादं न कुर्य्याः कुमतिं विमुञ्च माकोपय त्वं पुनरेव देवीम्।
भुक्ता चिरं कोपफलं हि तस्याः किं विस्मृतं मूढधिया त्वयाद्य॥
भक्त्या यथा पूजयसे महेशं तथानुरक्त्याऽर्च्चय तस्य कन्याम्।
तां पूजयित्वा परितोषयस्व प्रसाद्य भक्त्या च वरं लभस्व॥
दुःखं पुनः सोढुमशक्नुवाना निवेदयेऽहं तव पादपद्मम्।
कर्त्तव्यताज्ञानविहीनमुग्रं संशोध्य चित्तं भव शुद्धबुद्धिः॥
विरागबुद्धिं परिहाय देव्याः पूजाविधौ साधुमतिं कुरुष्व।
भजस्व तां भक्तिरसाभिषिक्तः प्रकाशयस्वात्मयशोविशेषम्॥
प्रबोधितः साधुरयं कियत्क्षणं विचिन्त्य सर्व्वं प्रददे तदुत्तरम्।
तया सहास्ते प्रतिपन्नता चिरं न किं त्वया तद्विदितं सुलोचने॥
काणीति वाणीं सततं ब्रवीमि यां कोपरोषेण तिरस्करोमि।
दृष्ट्वा च यां ताडयितुं प्रवृत्तो हिन्तालदण्डेन करोद्धृतेन॥
तत्पादपूजां कथमीदृशोऽहं करेण दक्षेण करोमि भक्त्या।
कथं मनो मे भवति प्रसन्नं तयाऽवमानव्यथितं परं स्यात्॥

किन्त्वेषा पुनरागमत् कुलवती बाला वधूर्वेकला
कृत्वा तादृगसाध्यसाधनविधौ कीर्त्तिं जगद्व्यापिनीं ।
पोता रत्नयुताः सुताः फणिहृताः सर्व्वे पुनर्जीविता
आनीता मम केतने निजगुणैः सन्तोष्य देवीं तया ॥
यत् कर्त्तव्यतयाभिधेयमनया ज्ञातुं न युक्तं मया
नोचेत्प्रेयसि संहरेत मनसा पुत्त्रान् पुनर्मे रुषा ।
वार्द्धक्ये तदहं जहामि शुचया प्राणानधीरः स्वय
मित्थं सङ्कटचिन्तने निपतितः कर्त्तव्यमूढोऽभवम् ॥
साशङ्कमेवं वङ्कशो विचिन्त्य स सम्मतोभून्मनसार्चनायाम् ।
पूजाविधौ साधुमतं विदित्वा चकार सर्व्वं भयधन्यवादं ॥
अथाऽसौ मनसादेवीं यष्टुकामो वणिग्वरः ।
पुरोहितं समाहूय प्रणिपत्य न्यवेदयत् ॥
ममेष्टं शृणु विप्रेन्द्र मनसां पूजयाम्यहं ।
तदुद्योगो यथायोग्यं विधिपूर्व्वं विधीयताम् ॥
इत्युक्तो हृष्टचित्तेन साधुनाऽसौ नियोजितः ।
पूजाविधिं समालोक्य तमुवाच पुरोहितः ॥
सुवर्णघटमानीय गन्धमाल्यैर्विभूषितम् ।
वारिणा पूरितं कृत्वा चण्डीगेहे निधापय ॥
स्नुहीशाखां ससिन्दूरां कज्जलेनापि चित्रिताम् ।
दत्त्वा घटमुखे यत्नादासने सन्निवेशय ॥
षोड़शेनोपचारेण तां यथाविधि पूजय ।
एवं निवेदितः साधुश्चकारायोजनं ततः ॥
नैवेद्यपात्राणि हिरण्मयानि सूपीकृताद्रीतपतण्डुलानि ।
सर्व्वोपचारेण युतान्यभूवन् स्वर्णासनप्रान्ते निवेशितानि ॥

घृतेन भृष्टानि च पिष्टकानि गोधूमचूर्णैः परिनिर्म्मितानि ।
सितोपलामिश्रितलड्डुकानि सक्षीरखण्डानि समर्पितानि ॥
पुष्पाणि माल्यानि च चन्दनानि सर्व्वाणि पात्रे परिशोभितानि ।
सशालनिर्यासकधूपधूमैर्बभूव चामोदितमस्य गेहम् ॥
जातः सघण्टाध्वनिशङ्खनादो सकांस्यढक्कादिकदुन्दुभीनां ।
वाद्योद्यमोऽजायत गायकैश्च गीतं सुगीतं मधुरस्वरेण ॥

उपस्थितास्तदा तत्र लेख्यपत्रैर्निमन्त्रिताः ।
ब्राह्मणाद्याश्चतुर्वर्णाः सभासन्निवेशिताः ॥
अनाहूताश्च ये केचित्तेऽपि सर्व्वे समागताः ।
पुरवासिगणाः सर्व्वे क्रमशोऽभ्यागतास्ततः ॥
अध्यासीनाः सभामध्ये बभूवुः पण्डितास्तदा ।
वादमुत्थाप्य शास्त्राणां तर्कवादेषु तत्पराः ॥
रोषारुणितनेत्राभ्यां तर्कयन्तः परस्परम् ।
चपेटैर्मुष्टिभिर्घ्नन्तो जातास्ते रौद्ररूपिणः ॥
गृहीत्वाङ्गुलिपर्वभ्यां नस्यं ते शम्बुकोदरात् ।
उत्सृजन्तो मुहुःस्रावं जगृहुस्तत्तथापि ते ॥
ये जिताः शास्त्रवादेन वाक्प्रभावं प्रकाश्य ते ।
जगुरस्मज्जयो जातो वादिनामसदुत्तरैः ॥
कालेन क्रमशस्तेषां शान्ता वादा मनीषिणां ।
यथा निर्वृतिमायान्ति वज्रघोषा घनात्यये ॥
ततस्तेभ्यो ददौ साधू रौप्यमुद्राश्च तैजसम् ।
स्वर्णं पात्रविशेषेभ्यस्ततस्ते जग्मुरालयम् ॥
अथ द्वौ साधुना विप्रौ तत्रधारकपूजकौ ।
वृतौ मन्त्रेण सङ्कल्प्य भगवार्च्चनकर्म्मणि ॥

आचार्य्यः पाठयामास पठति स्म पुरोहितः।
मन्त्रं तन्त्रविधानेन पूजायाश्चीतिरीहशी॥
देव्याः पूजाविधौ विप्रः साधोः प्रतिनिधिहितः।
भक्त्या युक्तः शुभाकाङ्क्षी चकाराचार्य्यवाङ्कितं॥
माहेशि मनवे मातरिहागच्छ निवेदये।
इहैव तिष्ठ स्वच्छन्दमपराधं क्षमस्व मे॥
ध्याता देवी ततस्तेन मन्त्रपाठेन तत्क्षणात्।
विदित्वा मनसा सर्व्वं कुहोविपिनवासिनी॥
अत्यस्थिरा सती तत्र तदा गोस्थामुपागमत्।
ग्रहीतुं पूजनं साधोः प्रदातुञ्च वरं पुनः॥
ध्यानं यथा ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे धन्वन्तरिरुवाच॥
"चारुचम्पकवर्णाभां सर्व्वाङ्गसुमनोहरां।
ईषद्धास्यप्रसन्नास्यां शोभितां सूक्ष्मवाससा॥
कवरीभारशोभाढ्यां रत्नाभरणभूषिताम्।
सर्व्वाभयप्रदां देवीं भक्तानुग्रहकातराम्॥
सर्व्वविद्याप्रदां शान्तां सर्व्वविद्याविशारदाम्।
नागेन्द्रवाहिनीं देवीं भजे कामेश्वरीं परामिति"॥
अथैत्य साधोः पुरमन्तरीक्षे रथे स्थिता सा मनसा विचिन्त्य।
छिन्नालकखण्डस्य भयेन सद्योर्भूमीतलं नावततार देवी॥
छिन्नालकखण्डपरिशोभितवाङ्कखण्डं
चन्द्रं विलोक्य मनसा सहसा जगाद।
साधो त्वया सह चिरं मम यो विवाद-
स्त्यक्तो मया त्वमधुना भव शुद्धबुद्धिः॥
प्रीतास्मि ते परममात्महिताङ्गमेन

त्वद्गेहमागतवती सहसाऽहमद्य।
तत् पालयस्व वचनं यदि पूजयेथा
हिन्तालदण्डमिह मुञ्च भुजोपयोग्यम्॥
चन्द्रस्ततः स्वयमभाषत तां प्रणम्य
त्वत्पादपङ्कजकृतोपकृतिं स्मरामि।
यज्जीविताः सुतगणाः सधनाश्च गावो
लब्धा मया हतधिया त्वदनुग्रहेण॥
अतोऽहं पूजयिष्यामि त्वत्पादौ भक्तितत्परः।
न करोमि पुनर्वादं सत्यं सत्यं वदाम्यहम्॥
ततस्तु वेङ्कलोवाच श्वशुरं विनयेन सा।
तात त्वं मुञ्च हिन्तालं किमनेन प्रयोजनम्॥
स्नुषावाक्यं समाकर्ण्य चन्द्रदासः करस्थितम्।
दूरं निक्षिप्य तद्दण्डं तोषयामास तां तदा॥
देवी तु सुस्थहृदया परितुष्टिमेत्य
मत्वाऽपराधमभया स्वयमाविरासीत्।
प्रीत्या प्रकाश्य निजरूपमिदं तमूचे
साधुं स्वपादयुगमर्च्चयितुं प्रहृष्टम्॥
शृणु मे वचनं चन्द्र पूजयाग्रे चरान् मम।
समागता मया सार्द्धं भुजङ्गानेककोटयः॥
सर्व्वकार्य्याणि मे नागाः प्रकुर्व्वन्ति प्रयत्नतः।
मम स्नेहविशेषेण ते हि मां जननीं विदुः॥
नागानतोऽग्रे परिपूजयस्व ततस्तु मामर्च्चयितुं यतस्व।
इत्याज्ञया तत्र भुजङ्गवर्गाः समागताः साधुसमक्षे तदानीम्॥

दृष्ट्वा तदा तानयमाशशङ्के किमागतास्ते गिलितुं वपुर्मे।
एवं समालोच्य सवाष्पनेत्रः स्थातुञ्च गन्तुं न शशाक साधुः॥
भीतं तमालोक्य भुजङ्गमाता विहस्य सस्नेहमिदं जगाद।
साधो कथं क्रन्दसि वा बिभेषि भयं न कुर्य्याः शृणु भक्तियुक्तः॥
एकत्र पूजा फणिनां सुसाध्या तुष्टास्तया तेऽपि भवन्ति सर्व्वे।
प्रत्येकतः पूजनमाशुसाध्यं न सम्भवेदत्र कदाचिदेव॥
उवाच तां त्वासयुतस्तदैष करोमि ते देवि यथानिदेशम्।
त्रायस्व मां सम्प्रति ते चरेभ्यो भयङ्कराकारभुजङ्गमेभ्यः॥
भयं कुतस्तेऽस्त्विय सुस्थचित्तस्तयैवमुक्तः पुटपाणिरादौ।
सोऽभ्यर्च्च्य नागान्मनसामयष्ट सर्व्वोपचारैर्गललग्नवासाः॥

सविनयमिदमूचे तामसौ भक्तिनम्र-
स्तवगुणमहिमानं नैव शक्नोमि वक्तुम्।
गगनपवनतेजो वारिभूतत्वन्दान्
सृजसि हरसि पासि त्वं हि देवि क्षणेन॥

त्वं भूलोके नागलोके वसन्ती स्वर्लोकेच त्वं स्वनामाचलस्था।
विश्वं व्याप्य त्वं प्रतिष्ठां गतासि विश्वेश्वरि त्वं विश्वरूपा विभासि॥

त्वं पूजिता भुजगभूपमुनीन्द्रदेवैः
सिद्धिप्रदाऽसि भुवनेश्वरि सर्व्वसिद्धे।
हीनप्रभावगुणयुक्तिबलेन देवि
त्वं स्तूयसे कथमनेन मयाधमेन॥

दृष्टं मया यदि च ते चरणारविन्दं
त्वं मे क्षमस्व मनसे कृपयापराधम्।
तुष्टा सतीह भवभीतिविनाशिनी त्वं
भक्ताय वाञ्छितफलं प्रददासि नित्यम्॥

स्तवेन देवी मनसा प्रसन्ना शुभाशिषा तं स्वयमित्युवाच।
सुखीभव त्वं सह पुत्रदारैस्तुष्टास्मि ते वत्स वचोऽमृतेन॥
गृहाण कल्याणकरं प्रसादं माल्यं ममेदं कुशलं ददाति।
त्वयार्च्चिताहं परितोषितास्मि ममाशिषा ते शिवमस्तु सर्व्वम्॥

प्रणिपत्य ततः साधुर्देव्याश्चरणपङ्कजौ।
प्रसादञ्च समासाद्य प्रफुल्लहृदयोऽभवत्॥
दिव्यं देव्याः प्रसादेन लब्धं माल्यं गुणान्वितम्।
साधोः शिरसि संरेजे नक्षत्रमण्डलं यथा॥
तदा तत्र स्थिता रामाः सोल्लासमिदमब्रुवन्।
अद्य भाग्यवती जाता सनका वेहुलागुणैः॥

धन्या धरायां सुरसुन्दरीव जाता वधूस्ते सनकेऽम्बुजाक्षी।
लक्ष्मीरिवेयं विदुषीप्रधाना साध्वीयसी पुण्यवती सतीव॥
सहास्यवक्त्रा सनका ततःपरं जगाम गेहं रमणीगणैर्वृता।
यदा यदा सा मनसामपूजयत् तदा रमण्यो हि यजन्ति यत्नतः॥

इति सद्वैद्यवाणवंशसम्भवजयनारायणसूनुश्रीभगवच्चन्द्रविशारदप्रणीते
वेहुलालखिन्दरे चम्पूकाव्ये मनसापूजाप्रकरणं नाम
सप्तमी मङ्गलम्।

समाप्तश्चायं सविशेषः प्रबन्धः॥

# परिशेषसङ्कलना।

अथ सोल्लासिता देवी निजपूजाफलश्रुतिम्।
चन्द्रमाख्यातुमारेभे ततो जन्मकथाफलम्॥

मङ्गलोवाच।

पूजाफलञ्च मे जन्मकथामवहितः शृणु।
श्रद्धया ये हि शृण्वन्ति तेऽभीष्टफलमाप्नुयुः॥
या मां भक्त्यार्च्चयेन्नारी व्रतं मे या च पालयेत्।
धनपुत्त्रवती सा स्यात् पत्युः सौभाग्यभागिनी॥
यदि मां पुरुषो भक्त्या प्रणतः पूजयिष्यति।
भुक्त्वानन्तसुखं वत्स प्रयाति परमं पदम्॥
येऽनुस्मरन्ति मन्नाम जययुक्ता भवन्ति ते।
मद्वरेणापि ते सन्ति सर्व्वसन्तोषभागिनः॥
अथ जन्मकथां यो मे शृणुयाद्वापि श्रावयेत्।
सर्व्वपापविनिर्मुक्तः सोऽक्षयं सुखमश्नुते॥
अतस्ते कथ्यते चन्द्र पुराणे वर्णितं यथा।
व्यासो जैमिनिना पृष्टो यदुवाच कृपान्वितः॥

व्यास उवाच।

युगान्तप्रलये काले पृथ्वी मग्ना जलान्तरे।
तदा सर्व्वं जले नष्टं चराचरमिदं जगत्॥
एकस्तत्र स्थितो देवो भगवान् भूतभावनः।
स्रष्टा पाता च संहर्त्ता स एवाद्यः सनातनः॥

एकदा स महादेवो महाविद्या स्वरूपिणीम् ।
स्मरन् देवीं गतो मोहं भ्रष्टचित्तस्ततोऽभवत् ॥
कल्पान्तसागरे तत्र पद्ममेकमुपस्थितम् ।
तदासीत्तन्महातेजः क्षिप्तं तत्पद्मकोरके ॥
एका कन्या ततो जाता पद्मयोनिः प्रकीर्त्तिता ।
सा लावण्यवती तेन वाच्या पद्मकुमारिका ॥
सर्व्वाङ्गसुन्दरी गौरी जगद्गौरीति विश्रुता ।
सुखेन मनसा जाता तेन सा मनसा स्मृता ॥
यदा मृत्युञ्जयेनातः कुमारी प्रत्यदृश्यत ।
कन्यात्वेन परिज्ञाता तदानीता निजालयम् ॥
तदालयस्थिता देवी गौरी रूपविगर्व्विता ।
सपत्नीमिव तां मेने दृष्ट्वा रूपं मनोहरम् ॥
ततः कोपेन रक्ताक्षीद्वन्द्वं कृत्वा पुनः पुनः ।
काणां चकार तन्नेत्रं तद्वैरूप्यचिकीर्षया ॥
ततस्तज्जनको देवस्तां ज्ञात्वा कृतलोचनाम् ।
स्वकीयं विपिनं नीत्वा प्रत्यष्ठापयत द्रुतम् ॥
तत्र स्नुहीवनं रम्यं चिरमध्युष्य कामिनी ।
ख्याता भवति स्वर्लोके मनसा वनवासिनी ॥
अतःपरं यथा दृष्टो नारदेन महर्षिणा ।
दृष्टो नारायणोऽवादीत्तत् प्रमाणं मयोच्यते ॥

नारायण उवाच ॥

"पुरा नागभयाक्रान्ता बभूवुर्मानवा भुवि ।
यान् यान् खादन्ति नागास्ते न ते जीवन्ति नारद ॥
ततो जीवयितुं जीवान् कश्यपो ब्रह्मणार्थितः ।

वेदवीजानुसारेण तन्मन्त्रान् ससृजे मुनिः ॥
पुनर्ब्रह्मोपदेशेन तपसा मनसा ततः ।
मन्त्राधिष्ठातृदेवीं तां मनसा ससृजे मुनिः ॥
मनसा मानसीकन्या कश्यपस्य महात्मनः ।
मनसा ध्यायते या सा परमात्मानमीश्वरी ॥
दीव्यन्ती मनसा देवी तेन सा मनसा (१) स्मृता ।
शिवशिष्येति सा शैवी (२) वैष्णवी (३) विष्णुभक्तितः ॥
त्रियुगस्य तपस्तप्त्वा जरत् कृत्वा शरीरकम् ।
जरत्कारुरियं (४) नाम्ना विख्याता जगतीतले ॥
विषं संहर्त्तुमीशा सा ततो विषहरी (५) मता ।
सिद्धयोगं हरात्प्राप तेन सा सिद्धयोगिनी (६) ॥
मृतसञ्जीवनीं विद्यां महाज्ञानस्य शाश्वतम् ।
सङ्गृह्य शिवतो देवी महाज्ञाना (७) प्रकीर्त्तिता ॥
भुवनेषु भृशं गौरी सुन्दरी सा मनोरमा ।
जगद्गौरीति(८) विख्याता जगत्सु सा प्रतिष्ठिता ॥
विश्वपूज्यमुनीन्द्रस्य जरत्कारोर्महात्मनः ।
प्रिया(९) देवी तथास्तीकजननी (१०) विश्वपूजिता ॥
कश्यपस्य मुनेः कन्या वासुकेर्भगिनी (११) ततः ।
नागेशी नागमातेति (१२) नागेभ्यो विषवण्टनात् ॥
अस्या द्वादशनामानि सर्व्वदा यः पठेन्नरः ।
तस्य नागभयं नास्ति तद्वंशसम्भवस्य च ॥
सा कुमारी समुत्थाय जगाम शङ्करालयम् ।
दिव्यं वर्षसहस्रञ्च तं सिषेवे मुनेः सुता ॥
भक्त्या सम्पूज्य कैलासे तुष्टाव चन्द्रशेखरम् ।

आशुतोषो महेशश्च ततस्तुष्टो बभूव सः ॥
महाज्ञानं ददौ तस्यै पाठयामास साम च ।
कृष्णमन्त्रं कल्पतरुं ददावष्टाक्षरं ततः ॥
जगाम तपसे साध्वी पुष्करं शङ्कराज्ञया ।
त्रियुगञ्च तपस्तप्त्वा कृष्णस्य परमात्मनः ॥
सिद्धा बभूव सा देवी ददर्श पुरतः प्रभुम् ।
दृष्ट्वा कृशाङ्गीं बालाञ्च कृपया स कृपानिधिः ॥
वरञ्च प्रददौ तस्यै पूजितेति भवे भव ।
वरं दत्त्वा च कल्याण्यै सद्यश्चान्तर्दधे विभुः ॥
प्रथमे पूजिता देवी कृष्णेन परमात्मना ।
द्वितीये शङ्करेणैव कश्यपेन सुरादिना" ॥

इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ४२ अध्यायः ॥

अथ मनसास्तोत्रं । धन्वन्तरिरुवाच ।

"नमामि सिद्धिरूपायै सिद्धिदायै नमो नमः ।
नमः कश्यपकन्यायै वरदायै नमो नमः ॥
नमः शङ्करकन्यायै शङ्करायै नमो नमः ।
नमस्ते नागवाहिन्यै नागेश्वर्य्यै नमो नमः ॥
नमो नागभगिन्यै च योगिन्यै च नमो नमः ।
नमोऽस्तीकजनन्यै च जनन्यै जगतां नमः ॥
नमो जरत्कारुनाम्न्यै जरत्कारुस्त्रियै नमः ।
नमश्चिरन्तपस्विन्यै सुखदायै नमो नमः ॥
नमस्तपःस्वरूपायै फलदायै नमो नमः ।
सुशीलायै च साध्व्यै च शान्तायै ते नमो नमः ॥

इत्येवमुक्त्वा भक्त्याच प्रणनाम प्रयत्नतः ।
तुष्टा देवी वरं दत्त्वा सत्वरं स्वालयं ययौ" ॥

इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे मनसाविजयोनाम ५१ अध्यायः ।

अथ वेङ्कलानखिन्दरपुरावृत्तमधुना कथ्यते ।

"द्वापरे युगविस्तारे कंसारिर्द्वारकापतिः ।
चक्रे स्ववंशविस्तारं यद्भारेणाधरा धरा ॥
विश्वकेतुस्तु तत्पौत्रो मीनकेतनसम्भवः ।
बालो हि रुध्यतेनैव योऽसौ शत्रुगणैरपि ॥
अनिरुद्धस्ततो नाम्ना विख्यातो भुवनत्रये ।
ऊषा बाणसुता तस्य प्रियासीत् परमा प्रिया ॥
यासौ पित्रोर्भयं बाल्ये लोकापवादसाध्वसम् ।
हित्वा बाला विविक्ते तं पतित्वेनाऽवृणोत् स्वयम् ॥
"स्वयं हि वृणुते राज्ञां कन्यका सदृशं वरम्" ।

(इति श्रीभागवते ५ स्कन्धे ४ अध्यायः" ॥)

अनुरागस्तयोर्दृष्ट्वो दम्पत्योरीदृशोऽभवत् ।
युगे युगे यथा प्रीतिः शाश्वती प्रत्यदृश्यत ॥
तावुभौ स्वेच्छया जातौ कलौ लीलाभिकाङ्क्षया ।
भूलोके मनसापूजाप्रचारायागताविव ॥
स्वर्गलोकादुपागत्याऽनिरुद्धे पृथिवीं गते ।
प्रेमासक्ता सती साध्वी तत ऊषा समागता ॥
कामदेवात्मजः सोऽयं कलौ चन्द्रसुतोऽभवत् ।
लखिनं यो दरत्याशु तेन ख्यातो लखिन्दरः ॥

ऊषानामधरा रामा वाणराजकुमारिका ।
साऽभवद्बेहुलानाम्नाऽमलागर्भे समुद्भवा ॥
या वेष्टते दृढ़ं बाला वेहुला तेन कथ्यते ।
वेष्टते यततेऽत्यर्थं साध्यातीतस्य साधने ॥
यदाऽसौ वेहुलामेतामुपयेमे नखिन्दरः ।
फणिना मनसादेशात्तस्यां रात्रौ हतोऽभवत् ॥
पूर्व्वगप्रथितप्रेमप्रकाशार्थं वणिक्सुता ।
श्वश्रूप्रभृतिनारीणां भ्रातॄणाञ्च हितैषिणाम् ॥
नोपरोधवचः साध्वी मेने पतिपरायणा ।
अङ्के कृत्वा ततो नाथमुत्ततार नदीजलम् ॥
ततोऽमरपुरं गत्वाऽतोषयद्देवतागणान् ।
देवीञ्च तोषयामास जीवयामास वल्लभम् ॥
सावित्रीव सती कीर्त्तिमर्ज्जयामास शाश्वतीम् ।
पतिभक्तिव्रतेनासीत् विख्याता सा पतिव्रता ॥
तस्याः प्रथानुसारेण तत्कथाश्रवणेन च ।
इदानीमपि देशेऽस्मिन् व्रतं कुर्व्वन्ति वालिकाः ॥
वेहुलाचरितं सर्व्वं मनसाचरितं पुनः ।
या शृणोति प्रयत्नेन सा सौभाग्यवती भवेत् ॥

एतदष्टवार्षिकममावस्याव्रतमित्युच्यते ।

अथ सा मनसा तुष्टा चन्द्रमूचे कृपान्विता ।
किन्ते चन्द्र प्रियं भूयः करोमि ब्रूहि साम्प्रतम् ॥
तस्याः सकरुणं वाक्यं श्रुत्वा चन्द्रः पुटाञ्जलिः ।
भक्त्या निवेदयामास त्वया सर्व्वं प्रियं कृतम् ॥

त्वत्पादपङ्कजवरं जननान्तरेऽपि
सेव्यं मयेति करणीयमिदं हि याचे ।
पुत्रो नखिन्द्र इव प्रतिजन्मनीत्थं
भूयाद्धूर्जननि वेङ्कलयासमेति ॥
नोचेत्त्वया सह गच्छाण कृतागसं मां
दीनं दयामयि जनं कृपया प्रसीद ।
मातस्तथा कुरु यथा न पुनर्भवो मे
देवि त्वमेव भवभीतिविमुक्तिहेतुः ॥

मनसोवाच ।

"उपस्थिते प्राणहरे कृतान्ते भवार्त्तिशान्त्यै सुधियां वरेण ।
प्रशान्तचित्तेन विचिन्तनीयं मुरारिपादाम्बुजयुग्ममेव ॥
मुरारिस्मरणाच्चन्द्र मूलमन्त्रजपेन मे ।
सर्व्वञ्च शुभमाप्नोति सिद्धो भवति मानवः ॥
अतः स्मर हरेर्नाम जपमन्त्रञ्च शाश्वतम् ।
मूलमन्त्रो हि वेदोक्तो भक्तानां वाञ्छितप्रदः ॥
मन्नामस्मरणेनापि मङ्गलन्ते भविष्यति "।
इत्थं प्रबोध्य तं देवी स्वर्लोकं सहसा ययौ ॥

इति सुप्रतिष्ठितगौरीभानिवासिसद्वैद्यवाणवंशसम्भवजयनारायणसूनु श्रीभगवच्चन्द्रविशारदप्रणीते वेङ्कलानखिन्द्रे चम्पूकाव्ये मनसादीनां जन्मकथाप्रसङ्गो नाम परिशेषसङ्कलना समाप्ता ।

समाप्तोऽयं ग्रन्थः



